॥ श्रीगणेशाय नमः ॥

सत्यधर्म ग्रन्थमालायाः पञ्चमम् पुष्पम्

# श्री देवीस्तोत्राष्टकम्

जिसमें भवानीसहस्रनाम, ललितासहस्रनाम, भगवती-पद्यपुष्पाञ्जलि, अन्नपूर्णास्तोत्र, देव्यपराधक्षमापन, ललिताम्बात्रिशतीस्तव, राजराजेश्वरी तर्पण और ज्ञानकलिका स्तोत्र हैं।

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव ॥



मनसुखराय मोर
५, क्लाइव रो,
कलकत्ता-१

प्रथमावृत्ति
१०००

सम्वत्
२०२६

## ॥ पुष्पाञ्जलिः ॥

समस्तमुनियक्षकिंपुरुषसिद्धविद्याधर-
गुहासुरसुराप्सरोगणमुखैर्गणैः सेविते ।
निवृत्तितिलकाम्बरप्रकृतिशान्तिविद्याकला-
कलापमधुराकृते कलित एष पुष्पाञ्जलिः ॥१॥

त्रिवेदकृतविग्रहे त्रिविधकृत्यसंधायिनि
त्रिरूपसमवायिनि त्रिपुरमार्गसंचारिणि ।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे
त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः ॥२॥

पुरन्दरजलाधिपान्तककुबेररक्षोहर-
प्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते ।
प्रवालपदपीठिकानिकटनित्यवर्तिस्वभू-
विरिञ्चिविहितस्तुते विहित एष पुष्पाञ्जलिः ॥३॥

यदानतिबलादहंकृतिरुदेति विद्यावय-
स्तपोद्रविणसौरभाकृतिकवित्वसंपन्मयी ।
जरामरणजन्मजं भयमपैति तस्यै समा-
हिताखिलसमीहितप्रसवभूमि तुभ्यं नमः ॥४॥

॥ सत्यधर्म ग्रन्थमाला का पञ्चम पुष्प ॥

# श्रीदेवीस्तोत्राष्टकम्

( भवानीसहस्रनाम, ललितासहस्रनाम, भगवतीपद्य-
पुष्पाञ्जलि, अन्नपूर्णास्तोत्र, देव्यपराधक्षमापन,
ललितात्रिशतीस्तव, राजराजेश्वरीतर्पण,
ज्ञानकलिकास्तोत्रैः समेतम् )

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥
( सौन्दर्यलहरीस्तोत्रम् )

मनसुखराय मोर
५, क्लाइव रो,
कलकत्ता-१

प्रथमावृत्तिः
१०००

❀ श्रीगणेशाय नमः ❀

# प्रकाशकीय निवेदन

सम्वत् २०२६ के चैत्रीय नवरात्र में परमादरणीय वीतराग अनन्तश्रीविभूषित श्रीमन्नारायणस्वामीजी महाराज ने रुद्रयामल तन्त्रोक्त भवानीसहस्रनामस्तोत्र की पूर्व प्रकाशित प्रतियाँ एकत्र कीं और उनमें कई पाठभेद देख यह आज्ञा दी कि अधिकाधिक प्रामाणिक पाठवाला भवानीसहस्रनाम प्रकाशित किया जाय। वैसे भगवती के तन्त्रोक्त एवं पुराणोक्त विंशत्यधिक सहस्रनाम हैं सब से ही पाठक्रम आरम्भ करने से अभूतपूर्व सिद्धसिद्धियों की प्राप्ति होती है परन्तु इस लघुपुस्तिका के कलेवर में उपर्युक्त नाम भवानीसहस्रनामस्तोत्र का आकलन परम माहेश्वर साहिब्कौलानन्दनाथ के द्वारा सम्वत् १७२३ तदनुसार १६६६ खृष्टीय सन् में वैशाख शुक्ला चतुर्दशी को इस प्राचीन सहस्रनाम के प्रति नाम पर एक-एक श्लोक रचना कर भगवती के गुणानुवाद की प्रशस्ति की। उसी "देवीनामविलास" में से सहस्र नामों की तुलना कर इसे प्रकाशित किया है। लगे हाथ ही "रहस्य" स्तोत्र नामक श्रीललितासहस्रनाम को भी देने का प्रस्ताव मेरे सम्मुख आया और दोनों सहस्रनाम इस पुस्तिका में इस प्रकार सम्मिलित किये गये। इस स्तोत्र का मूल आधार भी भास्कररायप्रणीत भाष्यसमेत श्रीललितासहस्रनाम ( निर्णय सागर प्रेस बम्बई ) को रक्खा गया।

इस प्रकार जब ये सहस्रनाम छप गये तो कवित्वदृष्टि से अत्यन्तगेय सुप्रचलित लघुस्तोत्र भगवतीपद्यपुष्पाञ्जलि, देव्य-पराधक्षमापन, अन्नपूर्णास्तोत्र राजराजेश्वरीतर्पण और ज्ञानकलिकास्तोत्र भी दे दिये गये। तब श्रीविद्योपासकों के हृदय का हार रुद्रयामल का त्रिशतीस्तोत्र भी सम्मिलित किया जाय यह विचार आया और सहर्ष उन्हें मुद्रित करा सहृदयधुरीण पाठक-पाठिकावृन्द के कर-कमलों में सादर भेंट है बहुत शीघ्र ही इसे प्रकाशित कराने में सम्पादकद्वय श्रीब्रह्मदत्तजी त्रिवेदी व्याकरणाचार्य एम० ए० एवं श्रीपंडित रामनाथजी मिश्र दाधीच पञ्चतीर्थ महानुभाव ने सपरिश्रम योगदान किया है। इन्हें श्रीललिताम्बा इसी प्रकार गुणगरिमाओं से विश्वकल्याणार्थ व्यापृत करती रहे यही एकमात्र हार्दिक कामना है।

पुनः कृपालु देवीभक्त पाठक-पाठिकाओं से इस लघु प्रयास में रही भूलों के लिये क्षमाप्रार्थना है। जो सुन्दर बन पाया है उसके लिये जगदम्बाचरणों की कृपा ही एकमात्र कारण है। इसे अपने सुपरिचित देवीभक्त सदुपयोग में लेकर हमारे परिश्रम को सफल बनावें यही प्रार्थना है।

"कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ।"

श्रावण कृष्णा
भौमाश्विनी
सप्तमी, वि०सं०-२०२६

कृपाभिलाषी
मनसुखराय मोर
५, क्लाइव रो,
कलकत्ता

# सादरं समर्पणम्



अखण्ड सौभाग्यवती स्वर्गीया श्रीमती भगवानी देवी जी मोर
के
प्रीत्यर्थ समर्पित

समर्पक—सम्पादक

॥ श्रीगणेशाय नमः ॥



॥ श्रीमत्यै भवान्यै नमः ॥

# मन्त्रगर्भं श्रीभवानीसहस्रनामस्तोत्रम्

शङ्खत्रिशूलशरचापकरां त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितामसुरसिद्धनुतां च दुर्गां
दुर्गानिभां दुरितदुःखहरां नमामि ॥

अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती
मधुरमधु पिबन्ती कण्टकान् भक्षयन्ती ।
दुरितमपहरन्ती साधकान् पोषयन्ती
जयति जगति देवी सुन्दरी क्रीडयन्ती ॥

चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् ।
खड्गशक्तिधरां देवीं वरदाऽभयपाणिकाम् ॥
प्रेतसंस्थां महारौद्रीं भुजगेनोपवर्तिनीम् ।
भवानीं कालसंहारबद्धमुद्राविभूषिताम् ॥

जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सुरैः ।
स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥३॥

ॐ नमो भवान्यै ॥

कैलासशिखरे रम्ये देवदेवं महेश्वरम् ।
ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ॥४॥
सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् ।
प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ॥५॥

श्रीनन्दिकेश्वर उवाच

देवदेव जगन्नाथ ! संशयोऽस्ति महान्मम ।
रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सल ॥६॥
देवतायास्त्वया कस्याःस्तोत्रमेतद्दिवानिशम् ।
पठ्यते निरतं नाथ ! त्वत्तः किमपरं महत् ॥७॥
इतिपृष्टस्तदा देवो नन्दिकेन जगद्गुरुः ।
प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः ॥८॥

श्रीभगवानुवाच

साधु साधु गुणश्रेष्ठ ! पृष्टवानसि मां च यत् ।
स्कन्दस्याऽपि च यद्गोप्यं रहस्यं कथयामि तत् ॥
पुरा कल्पक्षये लोकान् सिसृक्षुर्मूढचेतसः ।
गुणत्रयमयीशक्तिर्मूलप्रकृतिसञ्ज्ञिता ।
तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः ॥

चेतनेति ततः शक्तिर्मां काऽप्यालिङ्ग्य तस्थुषी ।
हेतुः सङ्कल्पजालस्य मनोऽधिष्ठायिनी शुभा ॥
इच्छेति परमाशक्तिरुन्मिमील ततः परम् ॥१२॥
ततो वागिति विख्याता शक्तिः शब्दमयी पुरा ।
प्रादुरासीज्जगन्माता वेदमाता सरस्वती ।
ब्राह्मी च वैष्णवी सैन्द्री कौमारी पार्वती शिवा ।
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी ।
तयैत्सृज्यते विश्वमनाधारं च धार्यते ।
तयैतत्पाल्यते सर्वं तस्यामेष प्रलीयते ॥१५॥
अर्चिता प्रणता ध्याता सर्वभावविनिश्चितैः ।
आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी ॥१६॥
तस्याअनुग्रहादेव तामेव स्तुतवानहम् ।
सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्य---परिपूजितैः ॥१७॥
स्तवेनाऽनेन सन्तुष्टा मामेव प्रविवेश सा ।
तदाऽऽरभ्य मया प्राप्तमैश्वरं पदमुत्तमम् ॥१८॥
तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥
ससुरासुरगन्धर्व-यक्षराक्षस-मानवम् ।
सपन्नगं साब्धिकञ्च सशैलवनकाननम् ।
सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् ॥
नन्दिन्नामसहस्रेण स्तवेनाऽनेन सर्वदा ।
स्तुवे परापराशक्तिं ममानुऽग्रहकारिणीम् ॥२१॥

इत्युक्त्वोपरतं देवं चराचरगुरुं विभुम् ।
प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ॥२२॥

श्रीनन्दिकेश्वर उवाच

भगवन् देवदेवेश लोकनाथ जगत्पते ।
भक्तोऽस्मि तव दासोऽस्मि प्रसादः क्रियातां मयि॥२३॥
देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि ॥
श्रोतुमिच्छाम्यहं देव ! प्रभावमपि चाऽस्यतु ॥२४॥

श्रीभगवानुवाच

शृणु नन्दिन् महाभाग ! स्तवराजमिमं शुभम् ।
सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् ॥२५॥
शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः ।
त्रिकालं श्रद्धया युक्तैर्नातः परतरःस्तवः ॥२६॥

अथ न्यासः

ॐ ह्रीं एकवीरायै नमः अङ्गुष्ठाभ्यां नमः ॐ ह्रीं महामायायै नमः तर्जनीभ्यां नमः ॐ ह्रीं पार्वत्यै नमः मध्यमाभ्यां नमः ॐ गिरिशप्रियायै नमः अनामिकाभ्यां नमः ॐ गौर्यं नमः कनिष्ठिकाभ्यां नमः ॐ करालिन्यै नमः करतलकरपृष्ठाभ्यां नमः ।

ॐ अस्य श्रीभवानी-नाम-सहस्रस्तवराजस्य श्रीभगवान्महादेव ऋषिः अनुष्टुप्छन्दः आद्याशक्तिः

श्रीभगवती भवानी देवता ह्रीं बीज श्रीं शक्तिः क्लीं कीलकं श्रीभगवतीभवानीप्रीत्यर्थे जपे विनियोगः।

अथ ध्यानम्

अर्धेन्दुमौलिममलाममराभिवन्द्यामम्भोजपाशसृणि-रक्त---कपालहस्ताम्। रक्ताङ्गरागवसनाभरणां त्रिनेत्रां ध्यायेच्छिवस्य वनितां मदविह्वलाङ्गीम्॥ ॐ बालार्क-मण्डलाभासां चतुर्बाहुं त्रिलोचनाम्। पाशाङ्कुशशरं चापं धारयन्तीं शिवां भजे।

ईश्वर उवाच

ॐ महाविद्या जगन्माता महालक्ष्मीः शिवप्रिया।
विष्णुमाया शुभा शांता सिद्धा सिद्धसरस्वती॥
क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमंगला।
हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया॥२॥
त्रिपुरा नन्दिनी नंदा सुनंदा सुरवन्दिता।
यज्ञविद्या महामाया वेदमाता सुधा धृतिः॥३॥
प्रीतिः प्रथा प्रसिद्धा च मृडानी विन्ध्यवासिनी।
सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता॥४॥
पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना।
प्रह्लादिनी महामाता दुर्गा दुर्गतिनाशिनी॥५॥
ज्वालामुखी सुगोत्रा च ज्योतिः कुमुदहासिनी।
दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी॥६॥

अपर्णा शाम्बरी माया मदिरा मृदुहासिनी ।
कुलवागीश्वरी नित्या नित्यक्लिन्ना कृशोदरी ॥७॥
कामेश्वरी च नीला च भीरुण्डा वह्निवासनी ।
लम्बोदरी महाकाली विद्याविद्येश्वरी तथा ॥८॥
नरेश्वरी च सत्या च सर्वसौभाग्यवर्द्धिनी ।
सङ्कर्षणा नारसिंही वैष्णवी च महोदरी ॥९॥
कात्यायनी च चंपा च सर्वसम्पत्तिकारिणी ।
नारायणी महानिद्रा योगनिद्रा प्रभावती ॥१०॥
प्रज्ञापारमिता प्रज्ञा तारा मधुमती मधुः ।
क्षीरार्णवसुधाहारा कालिका सिंहवाहिनी ।
ओङ्कारा वसुधाकारा चेतना कोपनाकृतिः ।
अर्धबिन्दुधरा धारा॥ १०० विश्वमाता कलावती ॥१२॥
पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती ।
कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी ॥१३॥
जिनमाता जिनेन्द्रा च शारदा हंसवाहना ।
राज्यलक्ष्मीर्वषट्कारा सुधाकारा सुधात्मिका ॥१४॥
राजनीतिस्त्रयी वार्ता दण्डनीतिः क्रियावती ।
सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा ॥१५॥
सिन्धुर्मन्दाकिनी गंगा यमुना च सरस्वती ।
गोदावरी विपाशा च कावेरी च शतद्रुका ।

सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः ।
नर्मदा कर्मनाशा च चर्मण्वत्यथ देविका ॥१७॥
वेत्रवती वितस्ता च वरदा नरवाहना ।
सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी ॥१८॥
एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी ।
सेना श्रेणिः पताका च सुव्यूहा युद्धकांक्षिणी ॥१९॥
पताकिनी दयारम्भा विपञ्चीपञ्चमप्रिया ।
परापरकलाकान्ता त्रिशक्तिर्मोक्षदायिनी ॥२०॥
ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी ।
इच्छा भगवती शक्तिः कामधेनुः कृपावती ॥२१॥
वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा ।
गौरी सुवर्णवर्णा च स्थिति-संहारकारिणी ॥२२॥
एकाऽनेका महेज्या च शतबाहुर्महाभुजा ।
भुजंगभूषणा भूषा षट्चक्रक्रमवासिनी ।
षट्चक्रभेदिनी श्यामा कायस्था कायवर्जिता ॥
सुस्मिता ॥२००॥ सुमुखी क्षामा मूलप्रकृतिरीश्वरी ॥२४॥
अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी ।
रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा ।
क्षुधा तृष्णा जरावृद्धा तरुणी करुणालया ।
कला काष्ठा मुहूर्ता च निमेषा कालरूपिणी ॥२६॥

सुकर्णरसना नासा चक्षुः स्पर्शवती रसा ।
गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः । २७
मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी ।
पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी ॥२८॥
योनिमुद्रा महामुद्रा खेचरी खगगामिनी ।
मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता ॥२९॥
मातंगी शुकहस्ता च पुष्पबाणेक्षुचापिनी ।
रक्ताम्बरधरा क्षीबा रक्तपुष्पावतंसिनी ॥३०॥
शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया ।
सुवेणिः पद्महस्ता च मुक्ताहारविभूषणा ॥३१॥
कर्पूरामोदनिःश्वासा पद्मिनी पद्ममन्दिरा ।
खड्गिनी चक्रहस्ता च भुसुण्डी परिघायुधा ॥३२॥
चापिनी पाशहस्ता च त्रिशूलवरधारिणी ।
सुबाणा शक्तिहस्ता च मयूरवरवाहना ॥३३॥
वरायुधधरा वीरा वीरपानमदोत्कटा ।
वसुधा वसुधारा च जया शाकम्भरी शिवा ॥३४॥
विजया च जयन्ती च सुस्तनी शत्रुनाशिनी ।
अन्तर्वती वेदशक्तिर्वरदा वरधारिणी ॥३५॥
शीतला च सुशीला च बालग्रहविनाशिनी ।
कुमारी च सुपर्वा च कामाख्या कामवन्दिता ॥३६॥

जालन्धरधराऽनन्ता ।३००। कामरूपनिवासिनी ।
कामबीजवती सत्या सत्यधर्मपरायणा ॥३७॥
स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी ।
षट्कोणा च त्रिकोणा त्रिनेत्रा त्रिपुरसुन्दरी ॥३८॥
वृषप्रिया वृषारूढा महिषासुरघातिनी ।
शुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा ॥३९॥
कपालभूषणा काली कपालमालधारिणी ।
कपालकुण्डला दीर्घा शिवादूती घनध्वनिः ॥४०॥
सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी ।
कम्बुग्रीवा वसुमती छत्रच्छायाकृतालया ॥४१॥
जगद्गर्भा कुण्डलिनी भुजगाकारशायिनी ।
प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी ॥४२॥
मूलाधारा निराकारा वह्निकुण्डकृतालया ।
वायुकुण्डसुखासीना निराधारा निराश्रया ॥४३॥
श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वह्निसंश्रया ।
वह्नितन्तुसमुत्थाना षड्रसास्वादलोलुपा ॥४४॥
तपस्विनी तपःसिद्धिस्तापसी च तपःप्रिया ।
तपोनिष्ठा तपोयुक्ता तपसः सिद्धिदायिनी ॥४५॥
सप्तधातुमयी मूर्तिः सप्तधात्वन्तराश्रया ।
देहपुष्टिर्मनस्तुष्टि ———रन्नपुष्टिर्बलोद्धता ॥४६॥

ओषधिर्वैद्यमाता च द्रव्यशक्तिः प्रभाविनी ।
वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी ॥४७॥
मृगया मृगमांसादा मृगत्वङ्मृगलोचना ।
वागुरा बंधरूपा च वधरूपा वधोद्यता ॥४८॥
वंदी वंदिस्तुताकारा काराबन्धविमोचनी ।
शृङ्खला खलहा विद्युद् दृढबन्धविमोचिनी ॥४९॥
अम्बिकाऽम्बालिका चाऽम्बा स्वक्षा साधुजनार्चिता ।
कौलिकी कुलविद्या च सुकुला कुलपूजिता ॥५०॥
कालचक्रभ्रमा भ्रान्ता विभ्रमा भ्रमनाशिनी ।
वात्याली मेघमाला च सुवृष्टिः(४००) सस्यवर्द्धिनी॥५१॥
अकारा च इकारा च उकारैकाररूपिणी ।
ह्रीङ्कारी बीजरूपा च क्लीङ्काराऽम्बरवासिनी ॥५२॥
सर्वाक्षरमयीशक्ति——रक्षरा वर्णमालिनी ।
सिन्दूरारुणवक्त्रा च सिन्दूरतिलकप्रिया ॥५३॥
वश्या च वश्यबीजा च लोकवश्यविभाविनी ।
नृपवश्या नृपैः सेव्या नृपवश्यकरी प्रिया ॥५४॥
महिषी नृपमान्या च नृमान्या नृपनन्दिनी ।
नृपधर्ममयी धन्या धनधान्यविवर्द्धिनी ॥५५॥
चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैश्च पूजिता ।
सर्वधर्ममयी सिद्धिश्चतुराश्रमवासिनी ॥५६॥

ब्राह्मणी क्षत्रिया वैश्या शूद्रा चावरवर्णजा।
वेदमार्गरता यज्ञा वेदविश्वविभाविनी ॥५७॥
अस्त्रशस्त्रमयी विद्या वरशस्त्रास्त्रधारिणी।
सुमेधाः सत्यमेधा च भद्रकाल्यपराजिता ॥५८॥
गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया।
त्रिसन्ध्या त्रिपदी धात्री सुपर्वा सामगायनी ॥५९॥
पाञ्चाली बालिका बाला बालक्रीडा सनातनी।
गर्भाधारधरा शून्या गर्भाशयनिवासिनी ॥६०॥
सुरारिघातिनी कृत्या पूतना च तिलोत्तमा।
लज्जा रसवती नन्दा भवानी पापनाशिनी ॥६१॥
पट्टाम्बरधरा गीतिः सुगीतिर्ज्ञानलोचना।
सप्तस्वरमयी तन्त्री षड्जमध्यमधैवता ॥६२॥
मूर्च्छनाग्रामसंस्थाना स्वस्था स्वस्थानवासिनी।
अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी ॥६३॥
नृत्तगीतप्रियाऽकामा तुष्टिदा पुष्टिदाऽक्षया।
निष्ठा सत्यप्रिया प्रज्ञा लोकेशी च सुरोत्तमा ॥६४॥
सविषा ज्वालिनी ज्वाला विश्वमोहार्तिनाशिनी।
विषारिर्नागदमनी (५००) कुरुकुल्लाऽमृतोद्भवा ॥६५॥
भूतभीतिहरारक्षा भूतावेशविनाशिनी।
रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः ॥६६॥
चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी।

डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी ॥६७॥
सितासितप्रिया स्वङ्गा सकला वनदेवता ।
गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा ॥६८॥
महामारी विनिद्रा च तन्द्रा मृत्युविनाशिनी ।
चन्द्रमण्डलसङ्काशा चन्द्रमण्डलवासिनी ॥६९॥
अणिमादिगुणोपेता सुस्पृहा कामरूपिणी ।
अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ॥७०॥
अनादिनिधना पुष्टिश्चतुर्बाहुश्चतुर्मुखी ।
चतुःसमुद्रशयना चतुर्वर्गफलप्रदा ॥७१॥
काशपुष्पप्रतीकाशा शरत्कुमुदलोचना ।
भूता भव्या भविष्या च शैलजा शैलवासिनी ॥७२॥
वाममार्गरता वामा शिववामाङ्गवासिनी ।
वामाचारप्रिया तुष्टा लोपामुद्रा प्रबोधिनी ॥७३॥
भूतात्मा परमात्मा च भूतभावविभाविनी ।
मङ्गला च सुशीला च परमार्थप्रबोधिका ॥७४॥
दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रिया ।
योगिनी योगयुक्ता च योगाङ्गा ध्यानशालिनी ॥७५॥
योगपट्टधरा मुक्ता मुक्तानां परमा गतिः ।
नारसिंही सुजन्मा च त्रिवर्गफलदायिनी ॥७६॥
धर्मदा धनदा चैव कामदा मोक्षदा द्युतिः ।
साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूपिणी ॥७७॥

क्रतुः कात्यायनी स्वच्छ स्वच्छन्दा च कविप्रिया ।
सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा ॥७८॥
मेनापुत्री सती माता मैनाकभगिनी (६००) तडित् ।
सौदामिनी स्वधामा च सुधामा धामशालिनी ॥७९॥
सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्द्धिनी ।
श्रीः कृत्तिवसना चैव कङ्काली कलिनाशिनी ॥८०॥
रक्तबीजवधोद्दृप्ता सुतन्तुर्बीजसन्ततिः ।
जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी ॥८१॥
चामीकररुचिश्चान्द्री साक्षया षोडशीकला ।
यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता ॥८२॥
चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी ।
चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा ॥८३॥
अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी ।
अमा कलशहस्ता च पूर्णकुम्भधरा धरा ॥८४॥
अभीरुर्भैरवी भीमा भीरात्रिपुरभैरवी ।
महारुण्डा च रौद्री च महाभैरवपूजिता ॥८५॥
निर्मुण्डा हस्तिनी चण्डा करालदशनानना ।
कराला विकराला च घोरघुर्घुरनादिनी ॥८६॥
रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा ।
कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया ॥८७॥
क्षान्तिर्बहुसुवर्णा च रतिर्बहुसुवर्णदा ।

मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी ॥८८॥
हिंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा।
पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुण्डला ॥८९॥
मषी च लेखिनी लेख्या सुलेखा लेखकप्रिया।
शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता ॥९०॥
कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्तिका।
अयोध्या द्वारका माया तीर्था तीर्थकरप्रिया ॥९१॥
त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी ॥७००॥
कौशिकी तु कुशावर्ता कौशाम्बी कोशवर्द्धिनी ॥९२॥
कोशदा पद्मकोशाक्षी कुसुमा कुसुमप्रिया।
तोतुला च तुलाकोटिः कूटस्था कोटराश्रया ॥९३॥
स्वयम्भूश्च सरूपा च स्वरूपा रूपवर्द्धिनी।
तेजस्विनी सुभिक्षा च बलदा बलदायिनी ॥९४॥
महाकोशी महावर्ता बुद्धिः सदसदात्मिका।
महाग्रहहरा सौम्या विशोका शोकनाशिनी ॥९५॥
सात्त्विकी सत्त्वसंस्था च राजसी च रजोवृता।
तामसी च तमोयुक्ता गुणत्रयविभाविनी ॥९६॥
अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी।
शङ्कराकल्पिनी कल्पा मनःसङ्कल्पसन्ततिः ॥९७॥
सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा।
सर्वज्ञानवती वाञ्छा सर्वतत्त्वानुबोधिनी ॥९८॥

जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका ।
त्वरा मन्दगतिर्मन्दा मदिरामोदधारिणी ॥९९॥
पानभूमिः पानपात्रा पानदानकरोद्यता ।
आघूर्णाऽरुणनेत्रा च किंचिदव्यक्तभाषिणी ॥१००॥
आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता ।
नागवल्ली नागकन्या भोगिनी भोगवल्लभा ॥१०१॥
सर्वशास्त्रवती विद्या सुस्मृतिर्धर्मवादिनी ।
श्रुतिःश्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी ॥१०२॥
मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला ।
सुनाभिर्यातना जातिर्गम्भीरा भाववर्जिता ॥१०३॥
नागपाशधरा मूर्तिरगाधा नागकुण्डला ।
सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी ॥१०४॥
सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरावलिः ।
मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका ॥१०५॥
मातृमंडलमध्यस्था मातृमंडलवासिनी ।
कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी । ८०० ॥१०६॥
अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी ।
सर्वसौख्यवती युक्तिराहारपरिणामिनी ॥१०७॥
निदानं पञ्चभूतानां भवसागरतारिणी ।
अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता ॥१०८॥
रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी ।

कलङ्करहिता नारी चतुःषष्ट्यभिधावती ॥१०६॥
जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा ।
अरजाश्च रतिःप्रीतीरतिरागविवर्द्धिनी ॥११०॥
पञ्चवातगतिर्भिन्ना पञ्चश्लेष्माशया धरा ।
पञ्चपित्तवती शक्तिः पञ्चस्थानविबोधिनी ॥१११॥
उदक्या च वृषस्यन्ती बहिःप्रस्रविणी त्र्यहम् ।
रजःशुक्रधराशक्तिर्जरायुर्गर्भधारिणी ॥११२॥
त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिस्त्रिपुरवासिनी ।
अरागा शिवतत्त्वा च कामतत्त्वानुरागिणी ॥११३॥
प्राच्यवाची प्रतीची दिगुदीची च विदिग्दिशाम् ।
अहङ्कृतिरहङ्कारा बलिमाया बलिप्रिया ॥११४॥
स्रुक् स्रुवा सामिधेनी च सश्रद्धा श्राद्धदेवता ।
माता मातामही तृप्तिः पितृमाता पितामही ॥११५॥
स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया ।
स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी ॥११६॥
शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी ।
उर्वशी कदली केका विशिखा शिखिनर्तिनी ॥११७॥
खट्वाङ्गधारिणी खट्वा बाणपुङ्खानुवर्तिनी ।
लक्ष्यप्राप्तिः कलाऽलक्ष्या लक्ष्या च शुभलक्षणा ॥११८॥
वर्तिनी सुपथाचारा परिखा च खनिर्वृतिः ।
प्राकारवलया वेला मर्यादा च महोदधौ ॥११९॥

पोषणी शोषणी शक्तिर्दीर्घकेशी सुलोमशा ॥६००॥
ललिता मांसला तन्वी वेदवेदाङ्गधारिणी ॥१२०॥
नराऽसृक्पानमत्ता च नरमुण्डास्थिभूषणा ।
अक्षक्रीडारतिः शारी शारिका शुकभाषिणी ॥१२१॥
शाम्बरी गारुडीविद्या वारुणी वरुणार्चिता ।
वाराही मुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा ॥१२२॥
मीनमूर्तिधरा मूर्ता वदन्या प्रतिमाश्रया ।
अमूर्ता निधिरूपा च सालिग्रामशिला शुचिः ॥१२३॥
स्मृतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः ।
प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका ॥१२४॥
इडा च पिङ्गला पिङ्गा सुषुम्णा सूर्यवाहिनी ।
शशिस्रवा च तालुस्था काकिन्यमृतजीविनी ॥१२५॥
अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिरा ।
स्थावरा जङ्गमा देवी कृतकर्मफलप्रदा ॥१२६॥
विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया ।
विश्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी ॥१२७॥
निर्विकारा च निर्वैरा विरतिः सत्यवर्धिनी ।
पुरुषाज्ञा च भिन्ना च क्षान्तिः कैवल्यदायिनी ॥१२८॥
विविक्तसेविनी प्रज्ञा जनयित्री बहुश्रुतिः ।
निरीहा च समस्तैका सर्वलोकैकसेविता ॥१२९॥

सेवा सेवाप्रिया सेव्या सेवाफलविवर्द्धिनी ।
कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी ॥१३०॥
प्रत्यञ्चा च धनुर्यष्टिः खड्गधारा दुरानतिः ।
अश्वप्लुतिश्च वल्गा च सृणिः सन्मत्तवारणा ॥१३१॥
वीरभूर्वीरमाता च वीरसूर्वीरनन्दिनी ।
जयश्रीर्जयदीक्षा च जयदा जयवर्द्धिनी ॥१३२॥
सौभाग्यसुभगाकारा सर्वसौभाग्यवर्द्धिनी ।
क्षेमङ्करी सिद्धिरूपा सत्कीर्तिः पथिदेवता ॥१३३॥
सर्वतीर्थमयी मूर्तिः सर्वदेवमयी प्रभा ।
सर्वसिद्धिप्रदा शक्तिः सर्वमङ्गलमङ्गला ॥१३४॥

१०००

ॐ ह्रीं सर्वमङ्गलमङ्गला ॥

पुण्यं सहस्रनामेदं शिवायाः शिवभाषितम् ।
यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः ॥ १३५ ॥
यश्चापि शृणुयान्नित्यं नरो निश्चलमानसः ।
एककालं द्विकालं वा त्रिकालं श्रद्धयान्वितः ॥ १३६ ॥
सर्वदुःखविनिर्मुक्तो धनधान्यसमन्वितः ।
तेजस्वी बलवान् शूरः शोकरोगविवर्जितः ॥ १३७ ॥
यशस्वी कीर्तिमान् धन्यः सुभगो लोकपूजितः ।
रूपवान् गुणसंपन्नः प्रभावीर्यसमन्वितः ॥ १३८ ॥

श्रेयांसि लभते नित्यं निश्चलां च शुभां श्रियम् ।
सर्वपापविनिर्मुक्तो लोभक्रोधविवर्जितः ॥ १३६ ॥
नित्यं बन्धुसुतैर्दारैः पुत्रपौत्रैर्महोत्सवैः ।
नंदितः सेवितो भृत्यैर्बहुभिः शुचिमानसैः ॥ १४० ॥
विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ।
वैश्यस्तु धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ॥ १४१ ॥
पुत्रार्थी लभते पुत्रं धनार्थी विपुलं धनम् ।
इच्छाकामं तु कामार्थी धर्मार्थी धर्ममक्षयम् ॥ १४२ ॥
कन्यार्थी लभते कन्यां रूपशीलगुणान्विताम् ।
क्षेत्रं च बहुशस्यं स्याद्गावश्च बहुदुग्धदाः ॥ १४३ ॥
नाशुभं नापदस्तस्य न भयं नृपशत्रुतः ।
जायते नाशुभा बुद्धिर्लभते कुलधुर्यताम् ॥ १४४ ॥
न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ।
न पिशाचो न डाकिन्यो भूतव्यंतरजंबुकाः ॥१४५ ॥
बालग्रहाभिभूतानां बालानां शांतिकारकम् ।
द्वन्द्वानां प्रीतिभेदे च मैत्रीकरणमुत्तमम् ॥१४६॥
लोहपाशैर्दृढैर्बद्धो बद्धो वेश्मनि दुर्गमे ।
तिष्ठन् शृण्वन् पठेन्मर्त्यो मुच्यते नात्र संशयः ॥१४७॥
न दाराणां न पुत्राणां न बन्धूनां न मित्रजम् ।
न वियोगं शुचं चैव लभते चिरजीविताम् ॥१४८॥

अन्धस्तु लभते दृष्टिं चक्षूरोगैर्न बाध्यते ।
बधिरः श्रुतिमाप्नोति मूको वाचं शुभां नरः ॥१४९॥
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ।
स्राविणी बद्धगर्भा च सुखमेव प्रसूयते ॥१५०॥
कुष्ठिनः शीर्णदेहा ये गतकेशनखत्वचः ।
पठनाच्छ्रवणाद्वाऽपि दिव्यकाया भवन्ति ते ॥१५१॥
ये पठन्ति सदा मर्त्याः शुचिष्मंतो जितेन्द्रियाः ।
अपुत्राः प्राप्नुयुः पुत्रान् शृण्वन्तोऽपि न संशयः ॥१५२॥
महाव्याधिपरिग्रस्तास्तप्ता ये विविधैर्ज्वरैः ।
भूताभिषंगसंघातैश्चातुर्थिकतृतीयकैः ॥१५३॥
अन्यैश्च दारुणै रोगैः पीड्यमानाश्च मानवाः ।
गतबाधाः प्रजायन्ते तैर्मुक्ता नात्र संशयः ॥१५४॥
श्रुतिगन्धधरो बालो दिव्यवादी कवीश्वरः ।
पठनाच्छ्रवणाद्वाऽपि भवत्येव न संशयः ॥१५५॥
अष्टम्यां वा चतुर्दश्यां नवम्यां चैकचेतसः ।
ये पठन्ति सदा मर्त्या न ते वै दुःखभाजनाः ॥१५६॥
नवरात्रं जिताहारो दृढभक्तिर्जितेन्द्रियः ।
चण्डिकायतने विद्वान् शुचिष्मान्मूर्तिसन्निधौ ॥१५७॥
एकाकी तु शतावृत्तीः पठन् धीरश्च निर्भयः ।
साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ॥१५८॥

सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये।
पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता ॥१५६॥
दशावृत्तीः पठेद्यस्तु भूमिशायी नरः शुचिः।
स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति ॥१६०॥
कवित्वं संस्कृते तेषां शास्त्राणां व्याकृतौ ततः।
शक्तिः प्रोन्मील्यते शास्त्रेष्वनधीतेषु भारती ॥१६१॥
आवर्तनसहस्रैर्ये पठन्ति पुरुषोत्तमाः।
ते सिद्धाः सिद्धिदा लोके शापानुग्रहणे क्षमाः ॥१६२॥
नखरागशिरोरत्नद्विगुणीकृतरोचिषः ।
प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महीश्वराः ॥१६३॥
रोचनालिखितं भूर्जे कुङ्कुमेन शुभे दिने।
धारयेद्यन्त्रितं देहे पूजयित्वा कुमारिकाम् ॥१६४॥
विप्राश्च वरनारीश्च धूपैः कुसुमचन्दनैः।
क्षीरखण्डाज्यभोज्यैश्च पूजयित्वा सुभूषिताः ॥१६५॥
बध्नन्ति ये महारक्षां बालानां च विशेषतः।
भवन्ति नृपपूज्यास्ते कीर्तिभाजो यशस्विनः ॥१६६॥
शत्रुतो न भयं तेषां दुर्जनेभ्यो न राजतः।
न च दाराभिचारेभ्यो न दारिद्र्यं न पश्यति ॥१३७॥
महार्णवे महानद्यां स्थितेऽपि च न भीः क्वचित्।
रणे द्यूते विवादे च विजयं प्राप्नुवन्ति ते ॥१६८॥

नृपाश्च वश्यतां यान्ति नृपमान्याश्च ये नराः ।
सर्वत्र पूजिता लोके बहुमानपुरःसराः ॥१६९॥
रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः ।
यौवनाक्रांतदेहाश्च श्रयन्ते वामलोचनाः ॥१७०॥
लिखितं मूर्ध्नि कण्ठे वा धारयेद्यो रणे शुचिः ।
शतधा युध्यमानं तं प्रतियोधो न पश्यति ॥१७१॥
केतौ वा दुन्दुभौ येषां तिष्ठते लिखितं रणे ।
मायासैन्यपरिग्रस्तान् कान्दिशीकान्हतौजसः ॥१७२॥
विचेतनान्विमूढांश्च शत्रुकृत्यविवर्जितान् ।
निर्जित्य शत्रुसंघातान् लभते विजयं ध्रुवम् ॥१७३॥
नाभिचारो न शापश्च वाणवीरादिकीलनम् ।
डाकिनी पूतना कृत्या महामारी च शाकिनी ॥१७४॥
भूताः प्रेताः पिशाचाश्च रक्षांसि व्यंतरादयः ।
न वसन्ति गृहे देहे लिखितं यत्र तिष्ठति ॥१७५॥
न शस्त्रानलतोयौघैर्भयं तस्योपजायते ।
दुर्वृत्तानां च पापानां बलहानिकरं परम् ॥१७६॥
मन्दुराकरिशालासु गवां गोष्ठे समाहितः ।
पठेत्तद्दोषशान्त्यर्थं कूटं कपटनाशिनी ॥१७७॥
यमदूतान्न पश्यन्ति न ते निरययातनाम् ।
प्राप्नुवन्त्यक्षयं चान्ते शिवलोकं सनातनम् ॥१७८॥

सर्वबाधासु घोरासु सर्वदुःखनिवारणम् ।
सुमंगलकरं स्वर्ग्यं पठितव्यं समाहितैः ॥१७९॥

श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ।
पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् ॥१८०॥

चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ।
नातः परतरो मन्त्रो नातः परतरः स्तवः ॥१८१॥

नातः परतरा विद्या तीर्थं नातः परात्परम् ।
ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः ॥१८२॥

एकवारं मुदा नित्यं येऽर्चयन्ति महेश्वरीम् ।
देवतानां देवता या ब्रह्माद्यैर्या च पूजिता ।
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला ॥१८३॥

एतामेव पुराराध्यां विद्यां त्रिपुरभैरवीम् ।
त्रैलोक्यमोहिनीरूपामकार्षीद्भगवान् हरिः ॥१८४॥

इति श्रीरुद्रयामलतंत्रे नंदिकेश्वरसंवादे महाप्रभावि
भवानीसहस्रनामस्तोत्रं संपूर्णम् ॥

---

॥ श्रीगणेशाय नमः ॥

# अथ ललिता-सहस्र-नाम-स्तोत्रम्

( रहस्यस्तोत्रम् )

( उपोद्घाताख्या प्रथमा कला )

त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।
त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ॥१॥
ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।
परिभाषा भाष्यन्ते सङ्क्षेपात्कौलिकप्रमोदाय ॥२॥
पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम् ।
षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥३॥
दशभ्वूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् ।
मुनिसूतहयाम्बाश्वाम्बा श्वोक्तिर्ध्यानमेकेन ॥४॥

अगस्त्य उवाच

अश्वानन महाबुद्धे सर्वशास्त्रविशारद ! ।
कथितं ललिता देव्याश्चरितं परमाद्भुतम् ॥१॥
पूर्वं प्रादुर्भवो मातुस्ततःपट्टाभिषेचनम् ।
भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥२॥
वर्णितं श्रीपुरं चाऽपि महाविभवविस्तरम् ।
श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ॥३॥

षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ।
अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ।
महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ॥
पुरश्चरणखण्डे तु जपलक्षणमीरितम् ।
होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ॥६॥
चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः ।
रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ।
स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥७॥
मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।
न तु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥८॥
तत्र मे संशयो जातो हयग्रीव दयानिधे ! ।
किं वा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥६॥
मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥१०॥

सूत उवाच

इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।
प्रहृष्टो वचनं प्राह तापसं कुम्भसम्भवम् ॥११॥
लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।
नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥१२॥
रहस्यमिति मत्वाऽहं नोक्तवांस्ते न चान्यथा ।
पुनश्च पृच्छसे भक्त्या तस्मात्ते तद् वदाम्यहम् ॥१३॥

ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः।
भवता न प्रदेयं स्यादभक्ताय कदाचन ॥१४॥
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित्।
श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥१५॥
उपासकाय शुद्धाय देयं नामसहस्रकम्।
यानि नामसहस्राणि सद्यः सिद्धिप्रदानि वै ॥१६॥
तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने!।
श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ॥१७॥
पुराणां श्रीपुरमिव शक्तीनां ललिता यथा।
श्रीविद्योपासकानाञ्च यथा देवो वरः शिवः ॥१८॥
तथा नाम सहस्रेषु वरमेतत्प्रकीर्तितम् ॥१९॥
यथाऽस्य पठनाद्देवि प्रीयते ललिताम्बिका।
अन्य नामसहस्रस्य पाठान्न प्रीयते तथा ।
श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥२०॥
बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम्।
पद्मैर्वा तुलसीपत्रैरेभिर्नामसहस्रकैः ॥२१॥
सद्यः प्रसादं कुरुते तत्र सिंहासनेश्वरी।
चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥२२॥
जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम्।
जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ॥२३॥

साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।
उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥२४॥
इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।
चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥२५॥
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।
भक्तस्याऽऽवश्यकमिदं नामसाहस्रकीर्तनम् ॥२६॥
तत्र हेतुं प्रवक्ष्यामि शृणु त्वं कुम्भसम्भव ! ।
पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥२७॥
वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् ।
वाग्देवतावशिन्याद्याः शृणुध्वं वचनं मम ॥२८॥
भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ।
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥२९॥
मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।
मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥३०॥
कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।
येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत् ॥३१॥

हयग्रीव उवाच ।

इत्याज्ञप्ता वचो देव्यः श्रीदेव्या ललिताम्बया ।
रहस्यैर्नामभिर्दिव्यैश्चक्रुःस्तोत्रमनुत्तमम् ॥ ३२ ॥
रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ।
ततः कदाचित्सदसि स्थित्वा सिंहासनेऽम्बिका ॥३३॥

स्वसेवावसरं प्रादात्सर्वेषां कुम्भसम्भव ।
सेवार्थमागतास्तत्र ब्रह्माणीब्रह्मकोटयः ॥३४॥
लक्ष्मीनारायणानां च कोटयः समुपागताः ।
गौरीकोटिसमेतानां रुद्राणामपि कोटयः ॥३५॥
मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याःसमागताः ।
शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥३६॥
दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।
तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥३७॥
तेषु दृष्ट्वोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।
तत्र श्रीललितादेवीकटाक्षाक्षेपनोदिताः ॥३८॥
उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा ।
अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥३९॥
श्रुत्वा स्तुवं प्रसन्नाभूल्ललिता परमेश्वरी ।
सर्वे ते विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥४०॥
ततः प्रोवाच ललिता सदस्यान् देवतागणान् ।
ममाऽऽज्ञयैव वाग्देव्यश्चक्रुः स्तोत्रमनुत्तमम् ॥४१॥
अङ्कितं नामभिर्दिव्यैर्मम प्रीतिविधायकैः ॥४२॥
तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ।
प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ॥४३॥
इदं नामसहस्रं मे यो भक्तः पठते सकृत् ।
मम प्रियतमो ज्ञेयस्तस्मै कामान्ददाम्यहम् ॥४४॥

श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ।
पश्चान्नामसहस्रं मे कीर्तयेन्मम तुष्टये ॥४५॥
मामचर्यतु वा मा वा विद्यां जपतु वा न वा ।
कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥४६॥
मत्प्रीत्या सकलान्कामाँल्लभते नाऽत्र संशयः ।
तस्मान्नामसहस्रं मे कीर्तयध्वं सदाऽऽदरात् ॥४७॥

हयग्रीवउवाच ।

इति श्रीललितादेवी शास्ति देवान्सहानुगान् ।
तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ॥४८॥
शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ।
पठन्ति भक्त्या सततं ललितापरितुष्टये ।
तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥५०॥
आवश्यकत्वे हेतुत्वे मया प्रोक्तो मुनीश्वर ! ।
इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया शृणु ॥५१॥

विनियोगः

अस्य श्रीललितासहस्रनामस्तोत्रमालामन्त्रस्य वशिन्यादिभ्यो वाग्देवताभ्य ऋषिभ्यो नमः शिरसि ॥१॥ अनुष्टुप्छन्दसे नमः मुखे ॥२॥ श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः हृदये ॥३॥ क० बीजाय नमः नाभौ ॥४॥ स० शक्तये नमः गुह्ये ॥५॥ ह० कीलकाय नमः पादयोः

॥६॥ चतुर्विधपुरुषार्थसिद्ध्यर्थे श्रीललिताप्रीतये जपे विनियोगाय सर्वाङ्गे ॥७॥

कूटत्रयं द्विरावृत्य बाला वा षडङ्गद्वयम् ॥

अथ ध्यानम्

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥५२॥

अथ प्रथमशतकं नाम द्वितीया तापिनीकला

*श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी ।
चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता ॥५२॥
उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता ।
रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥५३॥

---

*अक्षु शराच्छरवर्णास्ततः समानमन्तिमौ कचयोः ।
अथ मध्यान्यांस्तपयोर्द्वितीयमन्त्येत्यजेन्नवमम् ॥ ५ ॥
इत्थं शिष्टानुष्टुब्वर्णारब्धेषु नाम सु तु संख्या ।
अर्वनट त्रिद्विष्वेकद्वी चतुः कं जपानवरधीराः ॥ ६ ॥
किंधूपद्विस्तम्भच्छलभयमांसे पदे वरः सङ्गः ।
प्रकटगया जलवाटी धुसिधर्मे माखखोल्कटीकाधीः ॥७॥
इत्थं नामसहस्रं साधकलोकोपकारकं विहितम् ।
गुणगण सदसद्भावाभावावाश्रित्य ब्रह्मणोऽम्बायाः ॥८॥
मन्त्राद्यो जयति गुणीनवचरणस्त्रिशदर्धाभः ।
एकार्धत्रयदेहो भूमदहारीतसप्तपाल्लेशः ॥ ९ ॥

मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ।
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला ॥५४॥

चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा ।
कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥५५॥

अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।
मुखचन्द्रकलङ्काभमृगनाभिविशेषका ॥५६॥

वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका ।
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥५७॥

नवचम्पकपुष्पाभनासादण्डविराजिता ।
ताराकान्तितिरस्कारिनासाभरणभासुरा ॥५८॥

कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।
ताटङ्कयुगलीभूततपनोडुपमण्डला ॥५९॥

पद्मरागशिलादर्शपरिभाविकपोलभूः ।
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥६०॥

शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला ।
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरा ॥६१॥

निजसँल्लापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥६२॥

अनाकलितसादृश्यचिबुकश्रीविराजिता ।
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥६३॥

कनकाङ्गदकेयूरकमनीयभुजान्विता ।
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥६४॥
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।
नाभ्यालवालरोमालिलताफलकुचद्वयी ॥६५॥
लक्ष्यरोमलताधारतासमुन्नेयमध्यमा ।
स्तनभारदलन्मध्यपट्टबन्धवलित्रया ॥६६॥
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी ।
रत्नकिङ्किणिकारम्यरशनादामभूषिता ॥६७॥
कामेशज्ञानसौभाग्यमार्दवोरुद्वयान्विता ।
माणिक्यमुकुटाकारजानुद्वयविराजिता ॥६८॥
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका ।
गूढगुल्फा कूर्मपृष्ठजयिष्णु प्रपदान्विता ॥६९॥
नखदीधितिसच्छन्ननमज्जनतमोगुणा ।
पदद्वयप्रभाजालपराकृतसरोरुहा ॥७०॥
सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजा ।
मरालीमन्दगमना महालावण्यशेवधिः ॥७१॥
सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता ।
शिवकामेश्वराङ्कस्था शिवा स्वाधीनवल्लभा ॥७२॥
सुमेरुशृङ्गमध्यस्था श्रीमन्नगरनायिका ।
चिन्तामणिगृहान्तस्था पञ्चब्रह्मासनस्थिता ॥७३॥

महापद्माटवीसंस्था कदम्बवनवासिनी ।
सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥७४॥*
देवर्षिगणसंघातस्तूयमानाऽऽत्मवैभवा ।
भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता ॥७५॥
सम्पत्करी समारूढसिन्धुरव्रजसेविता ।
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥७६॥
चक्रराजरथारूढसर्वायुधपरिष्कृता ।
ज्ञेयचक्ररथारूढमन्त्रिणीपरिसेविता ॥७७॥
किरिचक्ररथारूढ - दण्डनाथपुरस्कृता ।
ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥७८॥
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता ।
नित्या - पराक्रमाटोपनिरीक्षणसमुत्सुका ॥७९॥
भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता ।
मन्त्रिण्यम्बाविरचित - विषङ्गवधतोषिता ॥८०॥
विशुक्रप्राणहरणवाराहीवीर्यनन्दिता ।
कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥८१॥
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता ।
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥८२॥

---

* अर्धचतुर्विंशतितनुभेदोद्भवगुणगणोदशपात् ।
दम्भावहगोमेदाभावेह चतुर्गुणागुणैर्गङ्गा ॥ १० ॥

कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः ।
महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ॥८३॥
कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका ।
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा ॥८४॥
हरनेत्राग्निसन्दग्ध - कामसञ्जीवनौषधिः ।
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥८५॥
कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी ।
शक्तिकूटैकतापन्नकट्यधोभागधारिणी ॥८६॥
मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा ।
कुलामृतैकरसिका कुलसंकेतपालिनी ॥८७॥
कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी ।
अकुला समयान्तस्था समयाचारतत्परा ॥८८॥
मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी ॥१००॥

धूम्रिकाकला ॥ ३ ॥

मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ॥८९
आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी ।
सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥९०॥
लडिल्लतासमरुचिः षट्चक्रोपरिसंस्थिता ।
महासक्तिः कुण्डलिनी विसतन्तुतनीयसी ॥९१॥
भवानी भावनागम्या भवारण्यकुठारिका ।
भद्रप्रिया भद्रमूर्तिर्भक्तसौभाग्यदायिनी ॥९२॥

भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।
शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥६३॥
शांकरी श्रीकरी साध्वी शरच्चन्द्रनिभानना ।*
शातोदरी शान्तिमती निराधारा निरञ्जना ॥६४॥
निर्लेपा निर्मला नित्या निराकारा निराकुला ।
निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥६५॥
नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।
नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥६६॥
निष्कारणा निष्कलङ्का निरुपाधिर्निरीश्वरा ।
नीरागा रागमथनी निर्मदा मदनाशिनी ॥६७॥
निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी ।
निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ॥६८॥
निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।
निःसंशया संशयघ्नी निर्भवा भवनाशिनी ॥६९॥*
निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।
निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ॥१००॥

---

*राजा चतुर्बलेन्द्रो भूत्वा बलिरागमान् द्विदशः ।
गुणगणगौण्यं गणगोमार्गे मार्गे मृगेण भवेत् ॥ ११ ॥

*गुणभुविगोमृगशृंगे मूलमघाभोगगौरवाभावे ।
स्थूणाङ्गमहान्तो द्विर्भवदूषितवाक्चतुर्विभाजोऽष्टौ ॥ १२ ॥

निस्तुला नीलचिकुरा निरपाया निरत्यया ।
दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥१०१॥
दुष्टदूरा दुराचारशमनी दोषवर्जिता ।
सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ॥१०२॥
सर्वशक्तिमयी सर्वमङ्गला ॥२००॥ सद्गतिप्रदा ।
मरीचिकला ॥ ४ ॥
सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ॥१०३॥
सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी ।
माहेश्वरी महादेवी महालक्ष्मीर्मृडप्रिया ॥१०४॥
महारूपा महापूज्या महापातकनाशिनी ।
महामाया महासत्वा महाशक्तिर्महारतिः ॥१०५॥
महाभोगा महैश्वर्या महावीर्या महाबला ।*
महाबुद्धिर्महासिद्धिर्महायोगेश्वरेश्वरी ॥१०६॥
महातन्त्रा महामन्त्रा महायन्त्रा महासना ।
महायागक्रमाराध्या महाभैरवपूजिता ॥१०७॥
महेश्वर-महाकल्प-महाताण्डव-साक्षिणी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥१०८॥
चतुःषष्ट्युपचाराढ्या चतुःषष्टिकलामयी ।
महाचतुःषष्टिकोटियोगिनीगण-सेविता ॥१०९॥

---

*भुवि हि चतुर्दहार्धं चतुष्पदार्धं भवेदविभौ ।
पादत्रयगुणदो द्विर्गौणार्हो द्विर्विभागशरवीरः ॥१३॥

मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा ।
चारुरूपा चारुहासा चारुचन्द्रकलाधरा ।।११०।।
चराचरजगन्नाथा चक्रराजनिकेतना ।
पार्वती पद्मनयना पद्मरागसमप्रभा ।।१११।।
पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।
चिन्मयी परमानन्दा विज्ञानघनरूपिणी ।।११२।।
ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता ।
विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ।।११३।।
सुप्ता प्राज्ञात्मिका तुर्या* सर्वावस्थाविवर्जिता ।
सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ।।११४।।
संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।
सदाशिवाऽनुग्रहदा पञ्चकृत्यपरायणा ।।११५।।
भानुमण्डलमध्यस्था भैरवी भगमालिनी ।
पद्मासना भगवती पद्मनाभसहोदरी ।।११६।।
उन्मेषनिमिषोत्पन्नविपन्नभुवनावली ।
सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ।।११७ ।।
आब्रह्मकीटजननी वर्णाश्रमविधायिनी ।
निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ।।११८।।

---

*दिवि भारतभुविताडघमृदुजंगमभोवदार्थदिवा ।
वाकचतुरंङ्घ्रि द्वर्यर्धा तत्फलमूलं तदेव वादबलम् ।।१४।।

श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिका ।
सकलागमसन्दोह-शुक्तिसम्पुटमौक्तिका ॥११९॥
पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी ।
अम्बिकाऽनादिनिधना हरिब्रह्मेन्द्रसेविता ॥१२०॥
नारायणी नादरूपा नामरूपविवर्जिता ।*
ह्रींकारी ह्रीमती ॥३००॥ हृद्या हेयोपादेयवर्जिता ॥१२१॥

ज्वालिनी कला ॥ ५ ॥

राजराजार्चिता राज्ञी रम्या राजीवलोचना ।
रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला । ॥१२२॥
रमा राकेन्दुवदना रतिरूपा रतिप्रिया ।
रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥१२३॥
काम्या कामकलारूपा कदम्बकुसुमप्रिया ।
कल्याणी जगतीकन्दा करुणारससागरा ॥१२४॥
कलावती कलालापा कान्ता कादम्बरीप्रिया ।
वरदा वामनयना वारुणीमदविह्वला ॥१२५॥
विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी ।
विधात्री वेदजननी विष्णुमायाविलासिनी ॥१२६॥*

---

*राजतरेखितलिङ्गै रहस्तैर्द्विर्विभूरतौ रेतः ।
हालामदभुविरक्तो गुणदम्भोवाजिगीर्णं द्विः ॥१५॥
*मृगजो द्विर्बालः खे जीवाभं पञ्चपादार्धम् ।
गुणभूवरतेजोर्धं रतिगुणदेशो दहेद्गणं दुरितम् ॥१६॥

क्षेत्रस्वरूपा क्षत्रेशी क्षेत्रक्षेत्रज्ञपालिनी ।
क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥१२७॥
विजया विमला वन्द्या वन्दारुजनवत्सला ।
वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥१२८॥
भक्तिमत्कल्पलतिका पशुपाशविमोचिनी ।
संहृताशेषपाखण्डा सदाचारप्रवर्तिका ॥१२९॥
तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका ।
तरुणी तापसाराध्या तनुमध्या तमोपहा ॥१३०॥
चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी ।
स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥१३१॥
परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता ।
मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥१३२॥
कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।
शृङ्गाररससम्पूर्णा जया जालन्धरस्थिता ॥१३३॥*
ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।
रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥१३४॥
सद्यः प्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।
षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥१३५॥

---

*द्वे द्वे चेद्वेद्वे भवदोहदभुविलेशशीलजलमोहैः ।
द्व्यर्धचतुर्भवगाः स्मो भुवि जलशोभाभगोलःखे ॥१७॥

नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी ।
नित्याषोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥१३६॥
प्रभावती प्रभारूपा प्रसिद्धापरमेश्वरी ।
मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥१३७॥
व्यापिनी॥४००॥ विविधाकारा विद्याऽविद्यास्वरूपिणी ।

रुचि कला ॥ ६ ॥

महाकामेश - नयन - कुमुदाह्लाद - कौमुदी ॥१३८॥
भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः ।
शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ॥१३९॥
शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।
अप्रमेया स्वप्रकाशाऽमनोवाचामगोचरा ॥१४०॥
चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।
गायत्री व्याहृतिः सन्ध्या* द्विजवृन्दनिषेविता ॥१४१॥
तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता ।
निःसीममहिमा नित्ययौवना मदशालिनी ॥१४२॥
मदाघूर्णितरक्ताक्षी मदपाटलगण्डभूः ।
चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ॥१४३॥
कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।
कुलकुण्डालया कौलमार्गतत्परसेविता ॥१४४॥

---

*दिवि कूटैरुदिते द्वे द्विर्द्विर्गीर्णा विभाति नदी ।
चत्वारो रूढफलं शम्भुर्भोजो बली राजा ॥१८॥

कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।
शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥१४५॥
तेजोवती त्रिनयना लोलाक्षी कामरूपिणी ।
मालिनी हंसिनी माता मलयाचलवासिनी ॥१४६॥*
सुमुखा नलिनी सुभ्रूः शोभना सुरनायिका ।
कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥१४७॥
वज्रेश्वरी वामदेवी वयोऽवस्थाविवर्जिता ।
सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥१४८॥
विशुद्धि-चक्रनिलयाऽऽरक्तवर्णा त्रिलोचना ।
खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥१४९॥
पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।
अमृतादिमहाशक्तिसम्वृता डाकिनीश्वरी ॥१५०॥
अनाहताब्जनिलया श्यामाभा वदनद्वया ।
दंष्ट्रोज्ज्वलाऽक्षमालादिधरा रुधिरसंस्थिता ॥१५१॥
कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया ।
महावीरेन्द्रवरदा* राकिण्यम्बास्वरूपिणी ॥१५२॥

---

*गलफफशोभावेगः शंभोर्वेदे चतुर्होमः ।
भूर्द्विस्ताद्राजैको मोदाङ्गणवासतो नतिहृत् ॥१९॥
*पञ्चपदी भाविचतुष्पदी द्विचरणीव शम्भोर्वाक् ।
चतुरङ्घ्रिवशे पञ्चाङ्घ्रिभवे द्वैकं चतुष्पदं च मम ॥२०॥

मणिपूराब्जनिलया वदनत्रयसंयुता ।
वज्रादिकायुधोपेता डामर्यादिभिरावृता ॥१५३॥

सुषुम्णा कला ॥ ७ ॥

रक्तवर्णा मांसनिष्ठा ॥५००॥ गुडान्नप्रीतमानसा ।
समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ॥१५४॥
स्वाधिष्ठानाम्बुजगता चतुर्वक्त्रमनोहरा ।
शूलाद्यायुधसम्पन्ना पीतवर्णातिगर्विता ॥१५५॥
मेदोनिष्ठा मधुप्रीता बन्धिन्यादिसमन्विता ।
दध्यन्नासक्तहृदया काकिनीरूपधारणी ॥१५६॥
मूलाधाराम्बुजारूढा पञ्चवक्त्राऽस्थिसंस्थिता ।
अङ्कुशादिप्रहरणा वरदादिनिषेविता ॥१५७॥
मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी ।
आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥१५८॥
मज्जासंस्था हंसवती मुख्यशक्तिसमन्विता ।
हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥१५९॥
सहस्रदलपद्मस्था सर्ववर्णोपशोभिता ।
सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी* ॥१६०॥

---

*हे दाराः फलरेखारम्भविवादे तमोंशोऽस्ति ।
खेदो देहे भीष्मो देवे वा त्र्यग्निलिङ्गफले ॥२१॥

सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी ।
स्वाहा स्वधा मतिर्मेधा श्रुतिस्मृतिरनुत्तमा ॥१६१॥
पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना ।
पुलोमजार्चिता बन्धमोचिनी बन्धुरालका ॥१६२॥
विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः ।
सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ॥१६३॥
अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी ।
कात्यायनी कालहन्त्री कमलाक्षनिषेविता ॥१६४॥
ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा ।
मृगाक्षी मोहिनीमुख्या मृडानी* मित्ररूपिणी ॥१६५॥
नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी ।
मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ॥१६६॥
पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी ।
माध्वीपानालसा मत्ता मातृकावर्णरूपिणी ॥१६७॥
महाकैलाशनिलया मृणालमृदुदोर्लता ।
महनीया दयामूर्तिर्महासाम्राज्यशालिनी ॥१६८॥
आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।
श्रीषोडशाक्षरीविद्या त्रिकूटा कामकोटिका ॥१६९॥

---

*शम्भोर्भाले मज्जज्जीवाभेदाच्चरे त्र्यङ्घ्रि ।
भवद्दृढभण्डो मन्दो गौणार्धं भूशिलाषाढे ॥२२॥

कटाक्षकिङ्करीभूतकमलाकोटिसेविता ।
शिरस्थिता चन्द्रनिभा भालस्थेन्द्रधनुः प्रभा ॥१७०॥
हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका ।
दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥१७१॥*
॥६००॥

भोगदा कला ॥ ८ ॥

दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी ।
गुरुमूर्तिर्गुणनिधिर्गोमाता गुहजन्मभूः ॥१७२॥
देवेशी दण्डनीतिस्था दहराकाशरूपिणी ।
प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥१७३॥
कलात्मिका कलानाथा काव्यालापविमोदिनी ।
सचामररमावाणी सव्यदक्षिणसेविता ॥१७४॥
आदिशक्तिरमेयात्मा परमा पावनाकृतिः ।
अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥१७५॥
क्लींकारी केवला गुह्या कैवल्यपददायिनी ।
त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥१७६॥
त्र्यक्षरी* दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता ।
उमाशैलेन्द्रतनया गौरी गन्धर्वसेविता ॥१७७॥

---

*भेदसुवित्र्यंत्रिभुवो गुणगणजार्धविभेजेर्धम् ।
भर्गो रोगेणैको मूलगुरोर्दण्डमुण्डशिला ॥२३॥
*मन्दिरचरतां विभवः शैवोमार्गो महान् हितोऽनुगुणः ।
गौणी लीलाद्रीं भावार्धविभेदा भवेदेव ॥२४॥

विश्वगर्भा स्वर्णगर्भाऽवरदा वागधीश्वरी ।
ध्यानगम्याऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥१७८॥
सर्ववेदान्तसम्वेद्या सत्यानन्दस्वरूपिणी ।
लोपामुद्रार्चिता लीला क्लृप्तब्रह्माण्डमण्डला ॥१७९॥
अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता ।
योगिनी योगदा योग्या योगानन्दयुगन्धरा ॥१८०॥
इच्छाशक्तिज्ञानशक्ति-क्रियाशक्तिस्वरूपिणी ।
सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥१८१॥
अष्टमूर्तिरजा जैत्री लोकयात्राविधायिनी ।
एकाकिनी* भूमरूपा निर्द्वैता द्वैतवर्जिता ॥१८२॥
अन्नदा वसुदा वृद्धा ब्रह्मात्म्यैक्यस्वरूपिणी ।
बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥१८३॥
मात्रारूपा बृहत्सेना भावाभावविवर्जिता ।
सुखाराध्या शुभकरी शोभना सुलभागतिः ॥१८४॥
राजराजेश्वरी राज्यदायिनी राज्यवल्लभा ।
राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥१८५॥
राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी ।
साम्राज्यदायिनी सत्यसन्धा सागरमेखला ॥१८६॥

---

*भूगीर्णाबलखेदालम्बारम्भाविभोर्वदेह्वावम् ।
हस्ती द्विवैकं वा भजते वाभूलमन्दमृगान् ॥२५॥

दीक्षिता दैत्यशमनी सर्वलोकवशंकरी ।
सर्वार्थदात्री सावित्री* सच्चिदानन्दरूपिणी ॥१८७॥
॥७००॥ विश्वाख्या कला ॥ ६ ॥
देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी ।
सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥१८८॥
सर्वोपाधिविनिर्मुक्ता सदाशिवपतिव्रता ।
सम्प्रदायेश्वरी 'साध्वी'* गुरुमण्डलरूपिणी॥१८९॥
कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।
गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥१९०॥
स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी ।
सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥१९१॥
चित्कलानन्दकलिका प्रेमरूपा प्रियङ्करी ।
नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥१९२॥
मिथ्याजगदधिष्ठाना* मुक्तिदा मुक्तिरूपिणी ।
लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता॥१९३॥

---

*देहगुणाद्भवलेशाद्द्विस्ते रूपं दिवाभूरि ।
वारिगणे भाविगुणास्त्रिपदलताभावजववादाः ॥२६॥
*गौः शैवे विरते चतुरङ्घ्रितनुर्द्विश्चतुर्बलं नेतुः ।
द्विर्मे गङ्गामाता रजश्चतुर्भाव जलमदाद्भावैः ॥२७॥

---

*यहाँ साधु+ई/साधुने नमः । यै नमः ।

भवदावसुधावृष्टिः पापारण्यदवानला ।
दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥१६४॥
भाग्याब्धिचन्द्रिका भक्तचित्तकेकिघनाघना ।
रोगपर्वतदम्भोलिर्मृत्युदारुकुठारिका ॥१६५॥
महेश्वरी महाकाली महाग्रासा महाशना ।
अपर्णा चण्डिका चण्डमुण्डासुरनिषूदनी ॥१६६॥
क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।
त्रिवर्गदात्री सुभगा त्र्यम्बका त्रिगुणात्मिका ॥१६७॥
स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।
ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥१६८॥
दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया ।
महती मेरुनिलया मन्दारकुसुमप्रिया ॥१६९॥
वीराराध्या विराड्रूपा विरजा विश्वतोमुखी ।
प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ॥२००॥*
मार्तण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः ।
त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥२०१॥
सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।
कपर्दिनी कलामाला कामधुक् कामरूपिणी ॥२०२॥

---

*गुणभावे गीर्णे द्विश्चतुर्दृदांविभुगुणे भवाङ्गमखे ।
वरगुणचतुर्विभाजां खलमदभावान्तरङ्गखिलविभवाः ॥२८॥

कलानिधिः काव्यकला रसज्ञा रसशेवधिः ॥८००॥

बोधिनी कला ॥१०॥

पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥२०३॥
परंज्योतिः परंधाम परमाणुः परात्परा ।
पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ॥२०४॥
मूर्तामूर्ता नित्यतृप्ता मुनिमानसहंसिका ।
सत्यव्रता सत्यरूपा सर्वान्तर्यामिणी सती ॥२०५॥
ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।
प्रसवित्री* प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥२०६॥
प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी ।
विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥२०७॥
मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी ।
भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥२०८॥
छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी ।
उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥२०९॥
जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी ।
सर्वोपनिषदुद्घुष्टा शान्त्यतीताकलात्मिका ॥२१०॥
गम्भीरा गगनान्तस्था गर्विता गानलोलुपा ।
कल्पनारहिता काष्ठाऽकान्ताकान्तार्धविग्रह ॥२११॥

---

*गुरुगीर्णे विभजचतुर्गुणदंगोमृदुचतुर्मतांशार्धम् ।
द्विर्गुणगुणितां लिखितां चतुः रवचरता दहेद्रुचि रोषात् ॥२६॥

कार्यकारणनिर्मुक्ता कामकेलितरङ्गिता ।
कनत्कनकताटङ्का लीलाविग्रहधारिणी ।।२१२।।
अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी ।
अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ।।२१३।।
त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी ।
निरामया निरालम्बा स्वात्मारामा सुधास्रुतिः ।।२१४।।*
संसारपङ्कनिर्मग्न - समुद्धरण - पण्डिता ।
यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ।।२१५।।
धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी ।
विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ।।२१६।।
विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।
अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ।।२१७।।

## धारिणी कला ११

वीरगोष्ठीप्रिया वीरा नैष्कर्म्या ९००।। नादरूपिणी ।
विज्ञानकलना कल्या विदग्धा बैन्दवासिनी ।।२१८।।
तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी ।
सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ।।२१९।।

---

*चतुरर्धभवो देवो वदन् विभेदं विभागमार्गेण।
गौणतरङ्गमतिः खलु शम्भोर्वादं चरंत्र्यङ्घ्रिः ।।३०।।

सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी ।
स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥२२०॥*
चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया ।
सदोदिता सदातुष्टा तरुणादित्यपाटला ॥२२१॥
दक्षिणा दक्षिणाराध्या दरस्मेरमुखाम्बुजा ।
कौलिनी केवलाऽनर्घ्यकैवल्यफलदायिनी ॥२२२॥
स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा ।
मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥२२३॥
विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।
प्रगल्भा परमोदारा परमोदा मनोमयी ॥२२४॥
व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।
पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ॥२२५॥
पञ्चमी पञ्चभूतेशी पञ्चसङ्ख्योपचारिणी ।
शाश्वती शाश्वतैश्वर्या शर्मदा शंभुमोहिनी ॥२२६॥*
धराधरसुता धन्या धर्मिणी धर्मवर्धिनी ।
लोकातीता गुणातीता सर्वातीता शमात्मिका ॥२२७॥

---

*खेचरता द्विर्भवदा देहे चैका भवेद्देवी ।
भगणे चतुर्गणा भूर्भवभालशतेन गोमेदा ॥३१॥
*गुणगणरवि खगेशं चतुर्हरन्तं चतुर्द्दढामोदम् ।
गुणिहृदि विभजभवाद्गुरुवर्गं च नवचरणं गदन्तमिति ॥३२॥

बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी ।
सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥२२८॥
सुवासिन्यर्चनप्रीताऽऽशोभना शुद्धमानसा ।
बिन्दुतर्पणसन्तुष्टा पूर्वजा त्रिपुराम्बिका ॥२२९॥
दशमुद्रासमाराध्या त्रिपुराश्रीवशङ्करी ।
ज्ञानमुद्रा ज्ञानगम्या ज्ञानज्ञेयस्वरूपिणी ॥२३०॥
योनिमुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा ।
अनघाऽद्भुतचारित्रा वाञ्छितार्थप्रदायिनी ॥२३१॥
अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी ।
अव्याजकरुणामूर्तिरज्ञानध्वान्तदीपिका ॥२३२॥
आबालगोपविदिता सर्वानुल्लङ्घ्यशासना ।
श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ॥२३३॥
श्रीशिवा शिवशक्त्यैक्यरूपिणी ललिताम्बिका ।

परिभाषाशेषः

श्रीमणि सध्रीं बिविधगुडदरान्देशैश्चपुष्टनादाभ्याम् ।
नामसु शतकारम्भा न स्तोभो नापि शब्दपुनरुक्तिः॥३३॥
मति वरदा कान्तादावकारयोगेन रक्तवर्णादौ ।
आकारस्य क्वचन तु पदयोर्योगेन भेदयेन्नाम ॥३४॥
साध्वी तत्त्वमयीति द्वेधा त्रेधा बुधो भिद्यात् ।
हंसवती चानर्घ्येत्यर्धान्तादेकनामैव ॥३५॥

शक्तिर्निष्ठाधाम ज्योतिः परपूर्वकं द्विपदम् ।
शोभन सुलभा सुगतिस्त्रिपदैकपदानि शेषाणि ॥३६॥
निधिरात्मा दम्भोलिः शेवधिरिति नाम पुँल्लिङ्गम् ।
तद्ब्रह्मधाम साधुज्योतिः क्लीबेऽव्ययं स्वधा स्वाहा ॥३७॥
आविंशतितः सार्धान्नानाफलसाधनत्वोक्तिः ।
तस्य क्रमशो विवृतिः षट्चत्वारिंशताश्लोकैः ॥३८॥

## क्षमा कला १२

इत्येवं नामसाहस्रं कथितं ते घटोद्भव !
रहस्यानां रहस्यञ्च ललिताप्रीतिदायकम् ॥२३४॥
अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ॥२३५॥
सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ।
सर्वापमृत्युशमनं कालमृत्युनिवारणम् ॥२३६॥
सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम् ।
पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ॥२३७॥
इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायकम् ।
जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ॥२३८॥
प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ।
पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ॥२३९॥
विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा ।
रहस्यनामसाहस्रमिदं पश्चात्पठेन्नरः ॥२४०॥

जन्ममध्ये सकृच्चापि य एवं पठते सुधीः ।
तस्य पुण्यफलं वक्ष्ये शृणु त्वं कुम्भसम्भव ! ॥२४१॥
गङ्गादिसर्वतीर्थेषु यः स्नायात्कोटिजन्मसु ।
कोटिलङ्गप्रतिष्ठां तु यः कुर्यादविमुक्तके ॥२४२॥
कुरुक्षेत्रे तु यो दद्यात्कोटिवारं रविग्रहे ।
कोटिं सौवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ॥२४३॥
यः कोटिं हयमेधानामाहरेद् गाङ्गरोधसि ।
आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ॥२४४॥
दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम् ।
श्रद्धया परया कुर्यात्सहस्रपरिवत्सरान् ॥२४५॥
तत्पुण्यं कोटिगुणितं लभेत्पुण्यमनुत्तमम् ।
रहस्यनामसाहस्रे नाम्नोऽप्येकस्य कीर्तनात् ॥२४६॥
रहस्यनामसाहस्रे नामैकमपि यः पठेत् ।
तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ॥२४७॥
नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ।
यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ॥२४८॥
बहुनाऽत्र किमुक्तेन शृणु त्वं कलशीसुत ।
अत्रैकनाम्नो या शक्तिः पातकानां निवर्तने ।
तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ॥२४९॥
यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति ।
स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ॥२५०॥

भक्तो यः कीर्तयन्नित्यमिदं नामसहस्रकम् ।
तस्मै श्रीललिता देवी प्रीताऽभीष्टं प्रयच्छति ॥२५१॥
अकीर्तयन्निदं स्तोत्रं कथं भक्तो भविष्यति ॥२५२॥
नित्यं सङ्कीर्तनाशक्तः कीर्तयेत्पुण्यवासरे ।
सङ्क्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ॥५२३॥
नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे ।
कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ॥२५४॥
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ।
पञ्चोपचारैः सम्पूज्य पठेन्नामसहस्रकम् ॥२५५॥
सर्वे रोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति ।
अयमायुष्करो नाम प्रयोगः कल्पनोदितः ॥२५६॥
ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ।
तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ॥२५७॥
सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् ।
तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ॥२५८॥
जलं सम्मन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ।
अभिषिञ्चेद् ग्रहग्रस्तान् ग्रहा नश्यन्ति तत्क्षणात् ॥२५९॥
सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ।
यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ॥२६०॥
वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ।
नवनीतं प्रदद्यात्तु पुत्रलाभोभवेद्ध्रुवम् ॥२६२॥

देव्याः पाशेन सम्बद्धामाकृष्टामङ्कुशेनच ।
ध्यात्वाऽभीष्टां स्त्रियं रात्रौ पठेन्नामसहस्रकम् ॥२६२॥
आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता ।
राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ॥२६३॥
त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ।
स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ॥२६४॥
आरुह्य याति निकटं दासवत्प्रणिपत्य च ।
तस्मै राज्यं च कोशञ्च दद्यादेव वशं गतः ॥२३५॥
रहस्यनामसाहस्रं यः कीर्तयति नित्यशः ।
तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ॥२६६॥
यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ।
तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ॥२६७॥
यो वाऽभिचारं कुरुते नामसाहस्रपाठके ।
निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम् ॥२६८॥
ये क्रूरदृष्ट्या वीक्षन्ते नामसाहस्रपाठकम् ।
तानन्धान्कुरुते क्षिप्रं स्वयं मार्तण्डभैरवः ॥२६९॥
धनं यो हरते चोरैर्नामसाहस्रजापिनः ।
यत्र कुत्र स्थितं वाऽपि क्षेत्रपालो निहन्ति तम् ॥२७०॥
विद्यासु कुरुते वादं यो विद्वान्नामजापिनः ।
तस्य वाक्स्तम्भनं सद्यः करोति नकुलीश्वरी ॥२७१॥

यो राजा कुरुते वैरं नामसाहस्रजापिनः ।
चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम् ॥२७२॥
यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ।
लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ॥२७३॥
मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ।
भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः ॥२७४॥
यस्त्वेकवारं पठति पक्षमेकमतन्द्रितः ।
मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात् ॥२७५॥
यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥२७६॥
यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने ।
अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ॥२७७॥
श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति ।
यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ॥२७८॥
तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता ।
यः कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ॥२७९॥
पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ।
परीक्ष्य विद्याविदुषस्तेभ्यो दद्याद्विचक्षणः ॥२८०॥
श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते ।
देवता ललिता तुल्या यथा नास्ति घटोद्भव! ॥२८१॥

रहस्यनाम साहस्रतुल्या नास्ति तथा स्तुतिः ।
लिखित्वा पुस्तके यस्तु नाम साहस्रमुत्तमम् ॥२८२॥
समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी ।
बहुनाऽत्र किमुक्तेन शृणु त्वं कुम्भसम्भव॥२८३॥
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते ।
तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ॥२८४॥
एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत्सकृत् ।
पद्मैर्वा तुलसीपुष्पैः कल्हारैर्वा कदम्बकैः ॥२८५॥
चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः ।
उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ॥२८६॥
अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः ।
तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ॥२८७॥
सा वेत्ति ललिता देवी स्वचक्रार्चनजं फलम् ।
अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ॥२८८॥
प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः ।
रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम् ॥२८९॥
स एव ललितारूपस्तद्रूपा ललिता स्वयम् ।
न तयोर्विद्यते भेदो भेदकृत्पापकृद्भवेत् ॥२९०॥
महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम् ।
अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ॥२९१॥
यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् ।
चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ॥२९२॥

सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः ।
पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितान् ॥२६३॥
अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम् ।
प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ॥२६४॥
यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः ।
समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ॥२६५॥
तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति ।
न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ॥२६६॥
निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ।
ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ॥२६७॥
धनार्थी धनमाप्नोति यशोऽर्थी प्राप्नुयाद्यशः ।
विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ॥२६८॥
नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने ।
कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ॥२६९॥
चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा ।
स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ॥३००॥*
कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ।
नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥३०१॥

---

*नामस्मरणावश्यकतोक्तिः सार्धत्रयोदशश्लोकैः ।
उपसंहारः सार्धैः पञ्चभिरेकेन सूतोक्तिः ॥३६॥

लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ।
विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ॥३०२॥
शिवनामसहस्राच्च देव्या नामैकमुत्तमम् ।
देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥३०३॥
तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ।
रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ॥३०४॥
तस्मात्संकीर्तयेन्नित्यं कलिदोषनिवृत्तये ।
मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ॥३०५॥
विष्णुनामपराः केचिच्छिवनामपराःपरे ।
न कश्चिदपि लोकेषु ललितानामतत्परः ॥३०६॥
येनाऽन्यदेवतानाम कीर्तितं जन्मकोटिषु ।
तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ॥३०७॥
चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ।
नामसाहस्रपाठश्च तथा चरमजन्मनि ॥३०८॥
यथैव विरला लोके श्रीविद्याचारवेदिनः ।
तथैव विरलो गुह्यनामसाहस्रपाठकः ॥३०९॥
मन्त्रराजजपश्चैव चक्रराजार्चनं तथा ।
रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ॥३१०॥
अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् ।
स चक्षुषा विना रूपं पश्येदेव विमूढधीः ॥३११॥

रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः ।
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥३१२॥
यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ।
नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥३१३॥
तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ।
इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ॥३१४॥
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।
यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥३१५॥
पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ।
यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥३१६॥
तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः ।
रहस्यनामसाहस्रं तस्मात्सङ्गोपयेदिदम् ॥३१७॥
स्वतन्त्रेण मया नोक्तं तवाऽपि कलशीभव ।
ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥३१८॥
कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ।
तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ॥३१९॥

सूतउवाच

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।
आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥३२०॥*

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसम्वादे ललितासहस्रनामस्तोत्रं नाम षट्त्रिंशोऽध्यायः॥३६॥

---

*इति परिभाषामण्डलमुदितं नरसिंहयज्वना विदुषा ।
सत्सम्प्रदायगमकं शिवभक्तानन्दनाय शिवम् ॥४०॥

# श्रीभगवतीपुष्पाञ्जलिस्तोत्रम् ।

श्रीभगवत्यै नमः ।

भगवति भगवत्पदपंकजं भ्रमरभूतसुरासुरसेवितम् । सुजनमानसहंसपरिस्तुतं कमलयाऽमलया निभृतं भजे ॥१॥ ते उभे अभिवन्देऽहं विघ्नेशकुलदैवते नरनागाननस्त्वेको नरसिंह नमोऽस्तु ते ॥२॥ हरिगुरुपदपद्मं शुद्धपद्मेऽनुरागाद्विगतपरमभागे सन्निधायादरेण । तदनुचरि करोमि प्रीतये भक्तिभाजां भगवति पदपद्मे पद्यपुष्पाञ्जलिं ते ॥३॥ केनैते रचिताः कुतो न निहिताः शुम्भादयो दुर्मदाः केनैते तव पालिता इति हि तत् प्रश्ने किमाऽचक्ष्महे । ब्रह्माद्या अपि शंकिताः स्वविषये यस्याःप्रसादावधि प्रीतये सा महिषासुरप्रमथिनी च्छिन्द्यादवद्यानि मे ॥४॥ पातु श्रीस्तु चतुर्भुजा किमु चतुर्बाहोर्महौजान्भुजान् धत्तेऽष्टदाशधा हि कारणगुणाः कार्ये गुणारम्भकाः । सत्यं दिक्पतिदन्तिसंख्यभुजभृच्छम्भुः स्वयम्भूः स्वयं धामैकं प्रतिपत्तये किमथवा पातुं दशाष्टौ दिशः ॥५॥ प्रीत्याऽष्टादशसंमितेषु युगपद् द्वीपेषु दातुं वरान् त्रातुं वा भयतो बिभर्षि भगवत्यष्टादशैतान् भुजान् । यद्वाऽष्टादशधा भुजांस्तु बिभृतः काली सरस्वत्युभे मीलित्वैकमिहानयोः प्रथयितुं सा त्वं रमे रक्ष माम् ॥६॥ [छन्दः] अयि गिरिनन्दिनि

नन्दितमेदिनि विश्वविनोदिनि नन्दनुते ! गिरिवरविन्ध्य-शिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते। भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूतिकृते जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥७॥ सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते; त्रिभुवनपोषिणि शंकर-तोषिणि किल्बिषमोषिणि घोषरते। दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते, जय जय० ॥८॥ अयि जगदम्ब मदम्ब कदम्बवनप्रियवासिनि हासरते शिख-रिशिरोमणितुंगहिमालयशृङ्गनिजालयमध्यगते। मधु-मधुरे मधुकैटभगंजिनि कैटभभंजिनि रासरते, जय जय० ॥९॥ अयि शतखण्डविखण्डितरुण्डवितुण्डितशुण्डगजाधि-पते, रिपुगजगण्डविदारणचण्डपराक्रमशौण्डमृगाधिपते। निजभुजदण्डनिपातितचण्डविपाटितमुण्डभटाधिपते, जय जय हे० ॥१०॥ अयि रणदुर्मदशत्रुवधोदितदुर्धरनिर्जर-शक्तिभृते, चतुरविचारधुरीणमहाशयदूतकृतप्रमथाधिपते दुरितदुरीहदुराशयदुर्मतिदानवदूतकृतान्तमते ! जय जय० ॥११॥ अयि शरणागतवैरिवधूवरवीरवराभयदायकरे, त्रिभुवनमस्तकशूलविरोधिशिरोधिकृतामलशूलधरे ॥ दुमि-दुमितामरदुन्दुभिनादमहोमुखरीकृततिग्मकरे, जय जय० ॥१२॥ अयि निजहुंकृतिमात्रनिराकृतधूम्रविलोचन-धूम्रशते, समरविशोषितशोणितबीजसमुद्भवशोणितबीज-

लतेशिवशिव शुम्भनिशुम्भमहाहवतर्पितभूतपिशाचरते,
जय जय० ॥१३॥ धनुरनुसंगरणक्षणसंग-परिस्फुरदंगनटत्-
कटके, कनकपिशंगपृषत्कनिषंगरसद्भटश्रृङ्गहताबटुके ।
कृतचतुरंगबलक्षितिरंगघटद्बहुरंगरटद्बटुके, जय जय०
॥१४॥ सुरललनाततथेयितथेयितथाभिनयोत्तरनृत्यरते,
कृतककुथः ककुथो दिडदाडिकतालकुतूहलगानरते । धिमि-
कटधिक्कटधिकटधिमिध्वनिधीरमृदंगनिनादरते, जय जय०
॥१५॥ जय जय जाप्यजये जयशब्दपरस्तुतितत्परविश्वनुते-
झणझणझिंजिमझिंकृतनूपुरसिंजितमोहितभूतपते। नटि-
तनटार्धनटीनटनायकनाटितनाट्यसुगानरते, जय जय०
॥१६॥ अयि सुमनः-सुमनः-सुमनः-सुमनःसुमनोहर-
कान्तियुते, श्रितरजनीरजनीरजनीरजनीरजनी करवक्त्र-
वृते॥ सुनयनविभ्रमरभ्रमरभ्रमरभ्रमरभ्रमराधिपते, जय जय०
॥१७॥ सहितमहाहवमल्लमतल्लिकमल्लितरल्लकमल्लरते, विर-
चितवल्लिकपल्लिकमल्लिकझिल्लिकभिल्लिकवर्गवृते, सितकृत-
फुल्लिसमुल्लसितारुणतल्लजपल्लवसल्ललिते, जय जय० ॥१८॥
अविरलगण्डगलन्मदमेदुरमत्तमतंगजराजपते, त्रिभुवनभूषण-
भूतकलानिधिरूपपयोनिधिराजसुते । अयि सुदतीजनला-
लसमानसमोहनमन्मथराजसुते, जय जय० ॥१९ कमल-
दलामलकोमलकान्तिकलाकलितामलभाललते, सकलवि-
लासकलानिलयक्रमकेलिचलत्कलहंसकुले । अलिकुलसंकु-

लकुवलयमण्डलमौलिमिलद्बकुलालिकुले, जय जय० ॥२०॥
करमुरलीरववीजितकूजितलज्जितकोकिलमञ्जुमते, मिलित-
पुलिंदमनोहरगुञ्जितरंजितशैलनिकुञ्जजगते। निजगुणभूतम-
हाशबरीबणसद्गुणसंभृतकेलितले, जय जय० ॥२१॥
कटितटपीतदुकूलविचित्रमयूखतिरस्कृतचन्द्ररुचे; प्रणतसु-
रासुरमौलिमणिस्फुरदंशुलसन्नखचन्द्ररुचे। जितकनकाचल-
मौलिपदोर्जितनिर्झरकुंजरकुंभकुचे, जय जय० ॥२२॥
विजितसहस्रकरैकसहस्रकरैकसहस्रकरैकनुते, कृतसुरतारक-
संगरतारक संगरतारकसूनुसुते। सुरथसमाधिसमान-
समाधिसमाधिसमाधिसुजातरते, जय जय० ॥२३॥
पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं सुशिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत्।
तव पदमेव परं पदमेमनुशीलयतो मम किं न शिवे,
जय जय० ॥२४॥ कनकलसत्कलसिन्धुजलैरनुसिंचिनुते
गुणरंगभुवं, भजति स किं न शचीकुचम्भतटीपरिरम्भ-
सुखानुभवम्। तव चरणं शरण करवाणि नतामरवाणिनिवासि
शिवम्; जय जय० ॥२५॥ तव विमलेन्दुकुलं वदनेन्दुमलं
सकलं ननु कूलयते, किमु पुरुहूतपुरीन्दुमुखीसुमुखीभिरसौ
विमुखीक्रियते। मम तु मतं शिवनामधने भवती कृपया
किमुत क्रियते, जय जय० ॥२६॥ अयि मयि
दीनदयालुतया कृपयैव त्वया भवितव्यमुमे, अयि जगतो

जननी कृपयाऽसि यथाऽसि तथाऽनुमितासि रते। यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरुते, जय जय० ॥२७॥ स्तुतिमितस्तिमितः सुसमाधिना नियमतोऽयमतोऽनुदिनं पठेत्। परमया रमयाऽपि निषेव्यते परिजनोऽपरिजनोऽपि च तं भजेत् ॥२८॥ रमयति किल कर्षस्तेषु चित्तं नराणामवरजवरयस्मात्द्रामकृष्णः कवीनाम्। अकृतसुकृतगम्यं राम्यशैकहर्म्यं स्तवनभवनहेतुं प्रीतये विश्वमातुः ॥२९॥ इन्दुरम्यो मुहुर्बिन्दुरम्यो मुहुर्बिन्दुरम्यो, यतः साऽनवद्यं स्मृतः। श्रीपतेः सूनुना कारितो योऽधुना विश्वमातुः पदे पद्यपुष्पाञ्जलिः ॥३०॥

इति श्रीभगवतीपद्यपुष्पाञ्जलिस्तोत्रं संपूर्णम् ॥

# अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी। प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१॥ नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी। काश्मीरागुरुवासितारुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥२॥ योगानन्दकरीरिपुक्षयकरी धर्मार्थनिष्ठाकरी

चन्द्रार्कानलभाससमानलहरी त्रैलोक्यरक्षाकरी। सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥३॥ कैलासाचलकन्दरालयकरी गौरी उमा शंकरी कौमारी निगमार्थगोचरकरी ओङ्कारबीजाक्षरी। मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥४॥ दृश्यादृश्यप्रभूतवाहनकरी ब्रह्माण्डभाण्डोदरी लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी। श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि ॥५॥ उर्वी सर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणीनीलसमानकुन्तलहश्वरी नित्यान्नदानेश्वरी। सर्वानन्दकरी नृणां शुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥६॥ आदिक्षान्तसमस्तवर्णनकरी शंभोस्त्रिभावाकरी काश्मीरात्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी। कामाकांक्षाकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥७॥ देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी वामा स्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी। भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥८॥ चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी चन्द्रार्काग्निसमानकुन्तलहरी चन्द्रार्कवर्णेश्वरी। मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी भिक्षां देहि० ॥९॥ क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदाशिवकरी विश्वेश्वरी

श्रीधरी । दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥१०॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥११॥ माता च पार्वती देवी पिता देवो महेश्वरः । बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥१२॥

इति श्रीमच्छंकराचार्यविरचितमन्नपूर्णास्तोत्रं सम्पूर्णम्

# श्रीदेव्यपराधक्षमापनस्तोत्रम्

न मंत्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो, न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः । न जाने मुद्रास्ते तदपि च न जाने विलपनं परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥१॥ विधेरज्ञानेन द्रविणविरहेणालसतया विधेयाशक्यत्वात्तव चरणोर्या च्युतिरभूत्। तदेतत्क्षन्तव्यं जननि सकलोद्धारिणी शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥२॥ पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः परं तेषां मध्ये विरलतरलोऽहं तव सुतः । मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥ जगन्मातर्मातस्तव चरणसेवा न रचिता न वा दत्तं देवि द्रविणमपि भूयस्तव मया । तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥४॥ परित्यक्त्वा देवान्विविधविधिसेवाकुलतया मया पञ्चाशीतेरधिकमपनीते तु वयसि । इदानीं चेन्मातस्तव यदि कृपा

नापि भविता निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ५ ॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा निरातङ्को रङ्को विहरति चिरं कोटिकनकैः । तपापर्णे कर्णे विशति मनुवर्णे फलमिदं जनः को जानीते जननि जपनीयं जपविधौ ॥६॥ चिताभष्मालेपो गरलमशनं दिक्पटधरो जटाधारी कंठे भुजगपतिहारी पशुपतिः । कपाली भूतेशो भजति जगदीशैकपदवीं भवानि त्वत्पाणिग्रहणपरिपाटी फलमिदम् ॥७॥ न मोक्षस्याकांक्षा न च विभववाञ्छापि च न मे। न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः । अतस्त्वां संयाचे जननि जननं यातु मम वै मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥८॥ नाराधितासि विधिना विविधोपचारैः किं रूक्षचिन्तनपरैर्न कृतं वचोभिः श्यामे त्वमेव यदि किंचन मय्यनाथे धत्से कृपामुचितमम्ब परं तवैव॥९॥ आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवे शिवे। नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ताः जननीं स्मरन्ति ॥१०॥ जगदम्ब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि । अपराधपरंपरावृत्तं नहि माता समुपेक्षते सुतम् ॥११॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा नहि । एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥१२॥

श्रीमच्छंकराचार्यविरचितं देव्यपराधक्षमापनस्तोत्रं सम्पूर्णम् ।

# अथ ललिताम्बात्रिशतीस्तवः प्रारभ्यते

अगस्त्य उवाच—

हयग्रीव दयासिन्धो भगवन् भक्तवत्सल ! ।
त्वत्तः श्रुतमशेषेण श्रोतव्यं यद्यदस्ति तत् ॥१॥
रहस्यनामसाहस्रमपि त्वत्तः श्रुतं मया ।
इतः परं च मे नास्ति श्रोतव्यमिति निश्चयः ॥२॥
तथापि मम चित्तस्य पर्याप्तिर्नैव जायते ।
कार्तार्थ्यमप्राप्त इव शोचत्यात्मापि मे प्रभो ॥३॥
किमिदं कारणं ब्रूहि ज्ञातव्यांशोऽस्ति वा पुनः ।
अस्ति चेन्मामनुब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम् ॥४॥
समाऽलम्बे तत्पादयुगुलं कलशोद्भवः ।
हयाननोऽपि भीतः सन् किमिदं किमिदं मुने ॥५॥
मुञ्च मुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः ।
चिरं विचार्य निश्चिन्वन् वक्तव्यं न मयेत्यसौ ॥६॥
तूष्णीं स्थितः स्मरन्नाज्ञां ललिताम्बाकृतां पुरा ।
प्रणमन्नेव स मुनिस्तत्पादावत्यजन् स्थितः ॥७॥
वर्षत्रयमुपासीनौ गुरुशिष्यौ तथा स्थितौ ।
शृण्वन्तस्तौ च पश्यन्तः सर्वे लोकास्तु विस्मिताः ॥८॥
ततः श्रीललिता देवी कामेश्वरसमन्विता ।
प्रादुर्भूय हयग्रीवं रहस्येवमवोचत ॥९॥

अश्वाननाऽऽवयोः प्रीतिः शास्त्रविश्वासतस्त्वयि।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥१०॥
स्वमातृयोनिवद्गोप्या विद्यैषेत्यागमा जगुः।
ततोऽपि गोपनीया मे सर्वपूर्त्तिकरी स्तुतिः ॥११॥
मया कामेश्वरेणाऽपि कृता सा गोपिता भृशम्।
मदाज्ञया वचोदेव्यश्चक्रुर्नामसहस्रकम् ॥१२॥
आवाभ्यां कथितो मुख्यः सर्वपूर्त्तिकरः स्तवः।
सर्वक्रियाणां वैकल्ये पूर्तिर्यज्जपतो भवेत् ॥१३॥
सर्वपूर्तिकरं तस्मादिति नाम कृतं मया।
तद्ब्रूहि त्वमगस्त्याय पात्रमेष न संशयः ॥१४॥
पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत् ॥१५॥
अमुञ्चमानस्त्वत्पादौ वर्षत्रयमसौ स्थितः।
एतज्ज्ञातुमतो भक्तेरिदमेव निदर्शनम् ॥१६॥
चित्तपर्याप्तिरेतस्य नान्यथा सम्भविष्यति।
सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद ॥१७॥
इत्युक्त्वाऽन्तर्दधावम्बा कामेश्वरसमन्विता।
अथोत्थाय हयग्रीवः पाणिभ्यां कुम्भसम्भवम् ॥१८॥
संस्थाप्य निकटे वाचमुवाच भृशविस्मितः।
कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव ॥१९॥

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये।
येनागत्य स्वयं देवी तव वक्तव्यमन्वशात् ॥२०॥
सच्छिष्येण त्वयाऽहं च दृष्टवानस्मि तां शिवाम्।
यतन्ते यद्दर्शनार्था ब्रह्मविष्ण्वीशपूर्वकाः ॥२१॥
अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम् ।
यस्य स्मरणमात्रेण पर्याप्तिस्ते भवेद्धृदि ॥२२॥
रहस्यनामसाहस्रादपि गुह्यमिदं मुने ।
आवश्यकं ततोऽप्येतल्ललितां समुपासताम् ॥२३॥
तदहं ते प्रवक्ष्यामि ललिताम्बानुशासनात् ।
श्रीमत्पञ्चदशाक्षर्याः कादिवर्णक्रमान्मुने ॥२४॥
पृथग्विंशतिनामानि कथितानि घटोद्भव ।
आहत्य नाम्नां त्रिशती सर्वसम्पूर्तिकारिणी ॥२५॥
रहस्याऽतिरहस्यैषा गोपनीया प्रयत्नतः ।
तां श्रृणुष्व महाभाग सावधानेन चेतसा ॥२६॥
केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज ।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ॥२७॥
तस्मादेकाग्रमनसा श्रोतव्यं भवता सदा ।
इत्युक्त्वा तं हयग्रीवः प्रोचे नाम्नां शतत्रयीम् ॥

ॐ नमस्त्रिपुरसुंदर्यै ॥

अथ विनियोगः

अस्य श्रीत्रिशतीमालामन्त्रस्य भगवान् हयग्रीव ऋषिः, अनुष्टुप् छन्दः, ललितामहाभट्टारिका देवता। ऐं बीजम् सौः शक्तिः, क्लीं कीलकम्, इष्टार्थे विनियोगः। मूलेन षडङ्गन्यासः ॥

अथ ध्यानम्

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम् ।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥२८॥

# अथ त्रिशती

ॐ ककाररूपा कल्याणी कल्याणगुणशालिनी ॥
कल्याणशैलनिलया कमनीया कलावती ॥२९॥
कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।
कदम्बकाननावासा कदम्बकुसुमप्रिया ॥३०॥
कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा ।
कर्पूरवीटीसौरभ्यकल्लोलितककुब्तटा ॥३१॥
कलिदोषहरा कञ्जलोचना कम्रविग्रहा ।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ॥३२॥
एकाररूपा चैकाक्षी एकानेकाक्षराकृतिः ।
एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः ॥३३॥

एवमित्यागमाबोध्या चैकभक्तिमदर्चिता ।
एकाग्रचित्तनिर्ध्याता चैषणारहितादृता ॥३४॥
एलासुगन्धिचिकुरा चैनःकूटविनाशिनी ।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी ॥३५॥
एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता ।
एधमानप्रभा चैजदनेकजगदीश्वरी ॥३६॥
एकवीरादिसंसेव्या चैकप्राभवशालिनी ।
ईकाररूपिणीशित्री चेप्सितार्थप्रदायिनी ॥३७॥
ईदृगित्यविनिर्देश्या चेश्वरत्वप्रदायिनी ।
ईशानादिब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा ॥३८॥
ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।
ईडिता चेश्वरार्द्धाङ्गशरीरेशाधिदेवता ॥३९॥
ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।
ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥४०॥
ईहाविरहिता चेशशक्तिरीषत्स्मितानना ।
लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ॥४१॥
लाकिनी ललनारूपा लसद्दाडिमपाटला ।
ललन्तिका लसद्भाला ललाटनयनार्चिता ॥४२॥
लक्षणोज्ज्वलसर्वाङ्गी लक्षकोट्यण्डनायिका ।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ॥४३॥
ललामराजदलिका लम्बिमुक्तालताञ्चिता ।

लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥४४॥
ह्रीङ्काररूपा ह्रीङ्कारनिलया ह्रींपदप्रिया ।
ह्रीङ्कारबीजा ह्रींकारमन्त्रा ह्रीङ्कारलक्षणा ॥४५॥
ह्रीङ्कारजपसुप्रीता ह्रींमतिर्ह्रींविभूषणा ।
ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥४६॥
ह्रीङ्कारवाच्या ह्रीकारपूज्या ह्रींकारपीठिका ।
ह्रीङ्कारवेद्या ह्रीङ्कारचिन्त्या ह्रींह्रींशरीरिणी ॥४७॥
हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।
हरिप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ॥४८॥
हयारूढासेविताङ्घ्रिर्हयमेधसमर्चिता ।
हयक्षवाहना हंसवाहना हतदानवा ॥४९॥
हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥५०॥
हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हालामदालसा ॥५१॥
सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।
सर्वकर्त्री सर्वभर्त्री सर्वहर्त्री सनातनी ॥५२॥
सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥५३॥
सर्वाधारा सर्वगता सर्वापगुणवर्जिता ।
सर्वारुणा सर्वमाता सर्वाभरणभूषिता ॥५४॥

ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
कामसञ्जीवनी कल्या कठिनस्तनमण्डला ॥५५॥
करभोरूः कलानाथमुखी कचजिताम्बुदा ।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका ॥५६॥
कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः ।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥५७॥
कल्पवल्लीसमभुजा कस्तूरीतिलकोज्ज्वला ।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ॥५८॥
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।
हरित्पतिसमाराध्या हठात्कारहतासुरा ॥५९॥
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा ।
हल्लीशलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥६०॥
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥६१॥
हय्यङ्गवीनहृदया हरिगोपरुणांशुका ।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ॥६२॥
लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता ।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥६३॥
लाक्षारससुवर्णाभा लक्ष्मणाग्रजपूजिता ।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥६४॥
लग्नचामरहस्त- श्रीशारदापरिवीजिता ।

लज्जापदसमाराध्या लम्पटा लकुलीश्वरी ॥६५॥
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रीङ्कारिणी च ह्रीङ्कारादि ह्रींमध्या ह्रींशिखामणिः ॥६६॥
ह्रीङ्कारकुण्डाग्निशिखा ह्रीङ्कारशशिचन्द्रिका ।
ह्रीङ्कारभास्कररुचिह्रीङ्काराम्भोदचञ्चला ॥६७॥
ह्रीङ्कारकन्दाङ्कुरिका ह्रीङ्कारैकपरायणा ।
ह्रीङ्कारदीर्घिकाहंसी ह्रीङ्कारोद्यानकेकिनी ॥६८॥
ह्रीङ्कारारण्यहरिणी ह्रीङ्कारावालवल्लरी ।
ह्रीङ्कारपञ्जरशुकी ह्रीङ्काराङ्गणदीपिका ॥६९॥
ह्रीङ्कारकन्दरासिंही ह्रीकाराम्बुजभृङ्गिका ।
ह्रीङ्कारसुमनोमाध्वी ह्रीङ्कारतरुमञ्जरी ॥७०॥
सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ॥७१॥
सकला सच्चिदानन्दा साध्वी सद्गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥७२॥
सकलाधिष्ठानरूपा सत्यरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ॥७३॥
सर्वोत्तुङ्गा सङ्गहीना सद्गुणा सकलेष्टदा ।
ककारिणी काव्यलोला कामेश्वरमनोहरा ॥७४॥
कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥७५॥

कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपःसिद्धिः कामेश्वरमनःप्रिया ॥७६॥
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥७७॥
कामेश्वराह्लादकरी कामेश्वरमहेश्वरी ।
कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा ॥७८॥
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ॥७९॥
लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ॥८०॥
लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।
लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः॥८१॥
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता ।
ह्रीङ्कारमूर्तिर्ह्रीङ्कारसौधशृङ्गकपोतिका ॥८२॥
ह्रीङ्कारदुग्धाब्धिसुधा ह्रीङ्कारकमलेन्दिरा ।
ह्रीङ्कारमणिदीपार्चि—र्ह्रीङ्कारतरुशारिका ॥८३॥
ह्रीङ्कारपेटकमणि- र्ह्रीङ्कारादर्शबिम्बिता ।
ह्रीङ्कारकोशासिता ह्रीकारास्थाननर्त्तकी ॥८४॥
ह्रीङ्कारशुक्तिकामुक्तामणि-र्ह्रीङ्कारबोधिता ।
ह्रीङ्कारमणिसौवर्णस्तम्भविद्रुमपुत्रिका ॥८५॥
ह्रीङ्कारवेदोपनिषद् ह्रीङ्काराध्वरदक्षिणा ।

ह्रीङ्कारनन्दनारामनवकल्पद्रुवल्लरी ॥८६॥
ह्रीङ्कारहिमवद्गङ्गा ह्रीङ्कारार्णवकौस्तुभा।
ह्रीकारमन्त्रसर्वना ह्रीङ्कारपरसौख्यदा ॐ ॥८७॥
ऋष्यादिन्यासं,षडगङ् न्यासं,ध्यानं, मानसपूजां च कृत्वा पठेत्]
इत्येतत्ते समाख्यातं दिव्यं नाम्नां शतत्रयम्।
रहस्यातिरहस्यत्वाद्गोपनीयं त्वया मुने ॥८८॥
शिववर्णानि नामानि श्रीदेव्या कथितानि तु।
शक्त्यक्षरादिनामानि कामेशकथितानि हि ॥८९॥
उभयाक्षरनामानि उभाभ्यां कथितानि तु।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ॥९०॥
नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम् ॥९१॥
इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तेः
पुनरधिकरहस्यं ज्ञातुमेवं जगाद ॥९२॥
अश्वानन महाभाग रहस्यमपि मे वद।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि च ॥९३॥
उभयोरपि नामानि कानि वा वद देशिक !।
इति पृष्टः कुम्भजेन हयग्रीवोऽवदत् पुनः ॥९४॥
तव गोप्यं किमस्तीह साक्षादम्बाऽनुशासतः।
इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज ? ॥९५॥

एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेद् ।
कत्रयं हद्वयञ्चैव शैवो भागः प्रकीर्तितः ॥९६॥
शेषाणि शक्त्यक्षराणि ह्रीङ्कार उभयात्मकः ।
एवं विभागमज्ञात्वा ये विद्याजपशालिनः ॥०७॥
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि ॥९८॥
चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥९९॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥१००॥
बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात् ॥१०१॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारे ऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनास्रके ॥१०२॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ॥१०३॥
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः परः शिवः ।
अविनाभावसम्बन्धस्तस्माद् बिन्दुत्रिकोणयोः ॥१०४॥
एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ।
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति ॥१०५॥
विरला एव लोकेऽस्मिन् श्रीविद्याचक्रवेदिनः ।
सामान्यवेदिनः सर्वे विशेषज्ञोऽतिदुर्लभः ॥१०६॥

स्वयंविद्याविशेषज्ञो विशेषज्ञं समर्चयेत् ।
तस्मै देयं ततो ग्राह्यमशक्तस्तस्य दापयेत् ॥१०७॥
अन्धं तमः प्रविशन्ति ये न विद्यामुपासते ।
विद्यान्योपासकानेवं निन्दत्यारण्यकी श्रुतिः ॥१०८॥
अश्रितासः श्रितासश्च यज्वानो येऽप्ययज्वनः ।
स्वर्यन्तो नापेक्ष्यन्ते इन्द्रमग्निं च ये विदुः ॥१०९॥
सिकता इव संयन्ति रश्मिभिः समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्याह चारण्यकी श्रुतिः ॥११०॥
यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥१११॥
इति तन्त्रेषु बहुधा श्रीविद्यामहिमोच्यते ।
मोक्षैकहेतुविद्यावान् स वै विद्वानितीर्यते ॥११२॥
न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।
मोक्षैकसेतुविद्या च श्रीविद्या नाऽत्र संशयः ॥११३॥
तस्माद्विद्याविदे देया विद्वान् विद्वानितीर्यते ।
तस्मै विद्याविदे दद्याद्दापयेत् तद्गुणान् स्तुवन् ॥११३॥
स्वयं विद्यारहस्यज्ञो विद्यामाहात्म्यवेद्यपि ।
विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः ॥११५॥
प्रसङ्गादेतदप्युक्तं प्रकृतं शृणु कुम्भज ! ।
यः कीर्तयेत् सकृद्भक्त्या दिव्यं नाम्नां शतत्रयम् ॥११६॥

तस्य पुण्यफलं वक्ष्ये दिङ्मात्रेण घटोद्भव।
रहस्यनामसाहस्रपाठे यत्फलमीरितम् ॥११७॥
तत्कोटिकोटिगुणितं त्वेकनामजपाद्भवेत्।
कामेश्वरीकामेशाभ्यां कृतं नामशतत्रयम् ॥११८॥
नान्येन तुलयेदेतत् स्तोत्रेणाऽन्यकृतेन तु।
श्रेयःपरम्परा यस्य भाविनी चोत्तरोत्तरम् ॥११९॥
तेनैव लभ्यते चैतत् पश्चाच्छ्रेयः परीक्षयेत्।
अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते ॥१२०॥
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिःसृता।
महाषोडशिकारूपान् विप्रानादौ तु भोजयेत् ॥१२१॥
अभ्यङ्गैर्गन्धतैलेन स्नातानुष्णेन वारिणा।
अभ्यर्च्य वस्त्रगन्धाद्यैः कामेश्वर्यादिनामभिः ॥१२२॥
सूपापूपैः शर्कराद्यैः पायसैः पलसंयुतैः ॥१२३॥
विद्याविदे विशेषेण भोजयेत् षोडश द्विजान्।
एवं नित्यावलिं कुर्यादादौ ब्राह्मणभोजनम् ॥१२४॥
त्रिशतैर्नामभिः पश्चाद् ब्राह्मणान् क्रमशोऽर्चयेत्।
तैलाभ्यङ्गादिकं दद्याद्विभवे सति भक्तितः ॥१२५॥
शुक्लप्रतिपदारभ्य पौर्णमास्यवधि क्रमात्।
दिवसे दिवसे विप्रा भोज्या विंशतिसङ्ख्यया ॥१२६॥
दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः।
त्रिंशत् षष्टिशतं विप्राः सम्भोज्यास्त्रिशतक्रमात् ॥१२७॥

एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ।
तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिता ॥१२८॥
रहस्यनामसाहस्रभोजनेऽप्येवमेव हि ।
आदौ नित्याबलि कुर्यात् पश्चाद् ब्राह्मणभोजनम् ॥१२९॥
रहस्यनामसाहस्रमहिमा यो मयोदितः ।
स शीकराणुरत्रैकनाम्नो महिमवारिधेः ॥१३०॥
वाग्देवीरचिते नामसहस्रे यद्यदीरितम् ।
तत्फलं समवाप्नोति नाम्नोऽप्येकस्य कीर्तनात् ॥१३१॥
एतदन्यैर्जपैः स्तोत्रैरर्चनैर्यत्फलं लभेत् ।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ॥१३२॥
रहस्यनामसाहस्रकोट्यावृत्त्या तु यत्फलम् ।
तद्भवेत् कोटिगुणितं नामत्रिशतकीर्तनात् ॥१३३॥
वाग्देवीरचितस्तोत्रे तादृशो महिमा यदि ।
साक्षात् कामेशकामेशीकृतेऽस्मिन् बुद्ध्यतां त्वया ॥१३४॥
सकृत् सङ्कीर्तिते दिव्यनाम्नामस्मिन् शतत्रये ।
भवच्चित्तस्य पर्याप्तिर्नूनमन्यानपेक्षिणी ॥१३५॥
न ज्ञातव्यमितोऽस्त्यन्यन्न जप्तव्यं च कुम्भज ।
यद्साध्यतमं कार्यं तत्तदर्थमिदं जपेत् ॥१३६॥
तत्तत्सिद्धिमवाप्नोति पश्चात् कार्यं परीक्षयेत् ॥१३७॥
ये ये प्रयोगास्तन्त्रेषु न तैर्यत् साध्यते फलम् ।

तत्सर्वं सिध्यति क्षिप्रं नामत्रिशतकीर्तनात् ॥१३८॥

आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् ।

विद्याप्रदं कीर्त्तिकरं सुकर्मत्वप्रदायकम् ॥१३९॥

सर्वसम्पत्प्रदं सर्वसिद्धिदं सर्वसौख्यदम् ।

सर्वाभीष्टप्रदं चैव देवीनामशतत्रयम् ॥१४०॥

एतज्जपपरो भूयो नान्यदिच्छेत् कदाचन ॥१४१॥

एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका ।

भक्तस्य यद्यदिष्टं स्यात् तत्तत् पूरयति ध्रुवम् ॥१४२॥

तस्मात् कुम्भोद्भव मुने कीर्तय त्वमिदं सदा ।

अपरं किञ्चिदपि ते बोद्धव्यं नावशिष्यते ॥१४३॥

एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ।

स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम् ॥१४४॥

आनन्दलहरीमग्नमानसः समवर्त्तत ॥१४५॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने स्तोत्रखण्डे नामत्रिशत्युपदेशनामा सर्वसम्पूर्तिस्तवः समाप्तः ।

---

# श्रीराजराजेश्वरीतर्पणस्तोत्रम्

( श्रीविद्यार्चनपद्धतौ )

कल्याणायुतपूर्णबिम्बवदनां पूर्णेश्वरानन्दिनीं,
पूर्णापूर्णपरापरेशमहिषीं पूर्णामृतास्वादिनीम् ।
सम्पूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥१॥

एकानेकमनेककार्यविविधां कार्यैकचिद्रूपिणीं
चैतन्यात्मकमेकचक्ररचितां चक्राङ्कएकाकिनीम् ।
भावाभावविवर्द्धिनीं भयहरां सद्भक्तिचिन्तामणिं
श्रीचक्र० ... ॥२॥

ईशाधीश्वरयोगवृन्दविदितां सानन्दभूतां परां,
पश्यन्तीं तनुमध्यमां विलसतीं श्रीविष्णुसद्रूपिणीम् ।
आत्मानात्मविचारिणीं त्रिवरणां विद्यात्रिबीजत्रयीं
श्रीचक्रप्रिय० ... ॥३॥

लक्ष्मीलक्षनिरीक्षणां निरुपमां रुद्राक्षमालाधरां,
साक्षात्कारणदक्षवंशकलितां दीर्घाक्षदीर्घेश्वरीम् ।
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं मुद्रिणीं
श्रीचक्र० ... ॥४॥

ह्रीं बीजान्वितनादबिन्दुभरितां ओङ्कारनादात्मिकां
ब्रह्मानन्दघनोदरीं गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।

इच्छाज्ञानक्रियावतीं जितवलीं गन्धर्व्वसंसेवितां
श्रीचक्र० ... ॥५॥
हर्षोन्मत्तसुवर्णपात्रभरितां पानोन्नताघूर्णितां
हुङ्कारप्रियशब्दब्रह्मनिरतां सारस्वतोल्लासिनीम् ।
सारासारविचारवादचतुरां वर्णाश्रमाकारिणीं
श्रीचक्र० ... ॥६॥
सर्वज्ञानकलावतीं सकरुणां स्वंनादिनीं मादिनीं
सर्वान्तर्गतशालिनीं शिवतनुसन्दीपिनीं दीपिनीम्।
संयोगप्रियरूपिणीं प्रियवतां प्रीतिप्रतापोन्नतां
श्रीचक्रप्रिय० ... ॥७॥
कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीं
कारुण्यां तनुबुद्धिकर्मविरतां सिन्धुप्रियां शालिनीम् ।
पञ्चब्रह्मसनातनान्तरगतां ज्ञेयाज्ञयोगान्वितां
श्रीचक्र० ... ॥८॥
हस्तेकुम्भनिभां पयोक्तभरितां पीनोन्नतां नौमि तां
हीराढ्याभरणां सुरेन्द्रवनितां शृङ्गारपीठालयाम् ।
योन्याकारिणीयोनिमुद्रितकरां नित्यामवर्णात्मिकां
श्रीचक्र० ... ॥९॥
लक्ष्मीलक्षणपूर्णभक्तिवरदां लीलाविनोदस्थितां
लक्ष्म्या रञ्जितपादपद्मयुगलां ब्रह्मेन्द्रसंसेविताम्।

लोकालोकितलोककामजननीं लोकप्रियाङ्कस्थितां
श्रीचक्र० ... ॥१०॥
ह्रींकारीं सुतरां करप्रियतनुं श्रीयोगपीठेश्वरीं
माङ्गल्यायतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ।
तारुण्यान्तपसार्चितान्तरुणिकां तन्त्र्यर्चितां नर्तिनीं
श्रीचक्र० ... ॥११॥
सर्वेशाङ्गविहारिणीं सकरुणां सर्वेश्वरीं सर्वगां
सत्यां सर्वमयीं सहस्रदलनां सप्तार्णवोपस्थिताम् ।
संसर्गादिविवर्जिनीं शुभकरीं बालार्ककोटिप्रभां
श्रीचक्रप्रियबिन्दु० ... ॥१२॥
कादिक्षान्तसुवर्णबिन्दुसुतनुं स्वर्णादिसिंहासिनीं
नानावर्णविचित्रचित्रचरितां चातुर्यचिन्तामणिम् ।
चित्तानन्दविधायिनीं सुविपुलां रूढत्रयां शेषिकां
श्रीचक्र० ... ॥१३॥
लक्ष्मीशादिविधीन्द्रचन्द्रमुकुटां षष्ठाङ्गपीठार्चितां
सूर्येन्द्राग्निमयैकपीठनिलयां त्रिस्थां त्रिकोणेश्वरीम् ।
गोश्रीगुर्विणीगर्वितां गगनगां गङ्गागणेशप्रियां
श्रीचक्र० ... ... ॥१४॥
ह्रींकूटत्रयरूपिणीं समयगां संसारिणीं हंसिनीं
वामाचारपरायणां सुकुलजां बीजावतीं मुद्रिकाम् ।
कामाक्षीं करुणार्द्रचित्रचरितां श्रीमन्त्रमूर्त्यात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥१५॥

श्रीविद्यातर्पणस्तोत्रं समाप्तम् ।

# त्रिपुरारहस्योक्तं ज्ञानकलिकास्तोत्रम्

शिवे देवि सम्वित्सुधासागराऽऽत्म-
स्वरूपाऽसि सर्वान्तराऽऽत्मैकरूपा ।
न किञ्चिद् विना त्वत्कलामस्ति लोके
ततः सत्स्वरूपाऽसि सत्येऽप्यसत्ये ॥ १ ॥

असत्यं पुनः सत्यमन्ये द्विरूपं द्वयातीतमेके जगुः सर्वमेतत् ।
न ते तां विदुर्मायया मोहितास्ते,
चिदानन्दरूपा त्वमेवाऽसि सर्वम् ॥ २ ॥

क्षणानां क्रमैर्भिन्नरूपां धराद्यै र्मितामाहुरेके तमोमात्ररूपाम् ।
तमोदीप्तिसंभिन्नरूपाञ्च शान्त-
स्वरूपां महेशीं विदुस्त्वां न तेऽज्ञाः ॥ ३ ॥

शिवादिक्षितिप्रान्ततत्त्वावलिर्या,
विचित्रा यदीये शरीरे विभाति ।
पटे चित्रकल्पा जले सेन्दुतारा,
नभोवत्परा सा त्वमेवाऽसि सर्वा ॥ ४ ॥

अभिन्नं विभिन्नं बहिर्वाऽन्तरे वा,
विभाति प्रकाशस्तमो वाऽपि सर्वम् ।
ऋते त्वां चितिं येन नो भाति किञ्चि-
त्ततस्त्वं समस्तं न किञ्चित्त्वदन्यत् ॥ ५ ॥

निरुध्याऽन्तरङ्गं विलाप्याऽक्षसङ्गं,
परित्यज्य सर्वत्र कामादिभावम् ।
स्थितानां महायोगिनां चित्तभूमौ,
चिदानन्दरूपा त्वमेका विभासि ॥ ६ ॥

तथाऽन्ये मनः सेन्द्रियं सञ्चरच्चाऽप्यसंयम्यतन्मार्गकेजागरूकाः।
स्वसम्वित्सुधाऽऽदर्शदेहे स्फुरन्तं,
महायोगिनाथाः प्रपश्यन्ति सर्वम् ॥ ७ ॥
निरुक्ते महासारमार्गेऽतिसूक्ष्मे
गतिं ये न विन्दन्ति मूढस्वभावाः ।
जनान् तान् समुद्धर्तुमक्षावगम्यं,
बहिः स्थूलरूपं विभिन्नं बिभर्षि ॥ ८ ॥
तदाराधनेऽऽनेकमार्गान् विचित्रान्,
विधायाऽथ मार्गेण केनापि यान्तम् ।
नदीवारि सिन्धुर्यथा स्वीकरोति,
प्रदाय स्वभावं नु स्वात्मीकरोषि ॥ ९ ॥
तथातासुमूर्तिष्वनेकासु मुख्या, धनुर्बाणपाशाङ्कुशाढ्यैवमूर्तिः।
शरीरेषु मूर्धैव ये तां भजेयुर्जनास्त्रैपुरीं मूर्तिमत्युत्तमास्ते॥१०॥
जनान् दुःखसिन्धोः समुद्धर्तुकामा,
पथस्ताननेकान् प्रदिश्य प्रकृष्टान् ।
दयार्द्रस्वभावेति विख्यातकीर्ति-
स्त्वमेकैव पूज्या पराशक्तिरूपा ॥ ११ ॥
सदा ते पदाब्जे मनःषट्पदोमेपिबंस्तद्रसंनिर्वृ तःसंस्थितोऽस्तु।
इति प्रार्थनां मे निशम्याऽऽशु मातर्विधेहि
स्वदृष्टिं दयार्द्रामपीषत् ॥१२॥
इति संस्तुत्य सा गौरी त्रिपुरां परमेश्वरीम् ।
स्तोत्रेण ज्ञानकलिकाख्येन ध्यानं समास्थिता ॥१३॥

इति ज्ञानकलिकास्तोत्रं सम्पूर्णम् ।

निरावरणसंविदुद्भ्रमपरास्तभेदोल्लस-
त्परापरचिदेकतावरशरीरिणि स्वैरिणि ।
रसायनतरङ्गिणीरुचितरङ्गसंचारिणि
प्रकामपरिपूरणि प्रकृत एष पुष्पाञ्जलिः ॥५॥
तरङ्गयति संपदं तदनु संहरत्यापदं
सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः ।
क्षिणोति दुरितानि यत्प्रणतिरम्ब तस्यै सदा
शिवंकरि शिवे परे शिवपुरन्ध्रि तुभ्यं नमः ॥६॥
शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्यन्दिनी ।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥७॥
त्वमेव जननी पिता त्वमथ बान्धवस्त्वं सखा
त्वमायुरपरा त्वमाभरणमात्मनस्त्वं कलाः ।
त्वमेव वपुषः स्थितिस्त्वमखिलायतिस्त्वं गुरुः
प्रसीद परमेश्वरि प्रणतपात्रि तुभ्यं नमः ॥८॥
कञ्जासनादिसुरवृन्दलसत्किरीट-
कोटिप्रघर्षणसमुज्ज्वलदंघ्रिपीठे ।
त्वामेव यामि शरणं विगतान्यभावं
दीनं विलोकय दयार्द्रविलोकनेन ॥९॥
श्रीललितामहात्रिपुरसुन्दर्यै नमः पुष्पाञ्जलिं समर्पयामि ॥

